श्रीः ।

प्रथमपरीक्षायै नियतं

रघुवंशस्य

# द्वितीयादिसर्गचतुष्टयम्

महाकवि—श्रीकालिदासविरचितं—

शतशो ग्रंथानामनुवादकेन संशोधकेन संपादकेन च मुरादाबादनिवासिना व्रजरत्नभट्टाचार्य्येण विरचितया रत्नप्रभाभिधानया संस्कृतव्याख्यया टिप्पणीभिश्च समलंकृतम् ।

तदेतत्

मुम्बय्यां 'नेटिवओपिनियन' मुद्रणालये

पं० व्ही. के. लोंढे-कंपनी,

इत्येतैः

मुद्रयित्वा प्रकाशितम् ।

शकाब्दाः १८३५, संवदब्दाः १९७०.

# प्रस्तावना।

संस्कृतभारत्या लोके सुप्रचाराय काशीस्थराजकीयप्रधानसंस्कृतमहाविद्यालये प्रथममध्यमोत्तमास्त्रिविधाः परीक्षाः प्रत्यब्दं भवन्ति । तत्र प्रथमपरीक्षार्थमुपस्थातुमिच्छूनां सुकुमारमतीनां विद्यार्थिनामुपकारकारणात्प्रथमपरीक्षायै नियतस्य रघुवंशस्य द्वितीयादिसर्गचतुष्टयस्य रत्नप्रभाभिधाना सरला संस्कृतव्याख्या सविस्तरमस्माभिर्निर्मिता । प्रथमपरीक्षायां परीक्ष्या छात्रा एतत्साहाय्येन सुसुखमुत्तीर्णा भविष्यन्तीत्यस्मदीया वर्त्तते धारणा ।

मार्गशीर्षशुक्लैकादशी<br>कलिसंवत् ५०१४<br>ता० ८ दिसंबर १९१३ ई०<br>चन्द्रवासरे.

व्याख्यानकर्ता—<br>व्रजरत्नभट्टाचार्य्यः<br>मुरादाबाद

श्रीः ।

# रघुवंशस्य द्वितीयादिसर्गचतुष्टयम् ।

( रत्नप्रभाव्याख्यया समन्वितम् )

## द्वितीयः सर्गः ।

**अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ॥ वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥**

अथ=रात्रिगमनानन्तरम् ॥ यशः=कीर्त्तिः "यशः कीर्त्तिः समज्ञा च" इत्यमरः, एव धनं वित्तं यस्य सः ( बहुव्रीहिः ) ॥ प्रजानाम्=प्रकृतीनाम् ॥ अधिपः=प्रभुर्दिलीप इत्यर्थः ॥ प्रभाते=प्रातःसमये ॥ जायया=भार्यया सुदक्षिणयेति भावः । प्रतिग्राहिते=स्वीकारिते । गन्धमाल्ये=गन्धं चन्दनादिकं, माल्यं स्रगादिकं यया ताम् ॥ आदौ पीतः=पीतवान् । पश्चात् प्रतिबद्धः=नियन्त्रितः, वत्सो यस्यास्ताम् ॥ ऋषेः=मंत्रद्रष्टुः तस्य मुनेः वसिष्ठस्य धेनुम्=गां नन्दिनीम् ॥ वनाय=वनं गन्तुम् । "तुमर्थाच्च भाववचनात्" इति चतुर्थी ॥ मुमोच=त्यक्तवान् ॥ १ ॥

**तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया ॥ मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २ ॥**

पांसु तुल्यं पापं विद्यते यस्मिन्सः पांसुलः ॥ न पांसुलाः अपांसुलाः तासाम् अपांसुलानाम्=पतिव्रतानाम् ॥ धुरि=अग्रे ॥ कीर्त्तनीया=कीर्त्तितुं योग्या । परिगणनीयेत्यर्थः ॥ मनुष्याणां नराणां ईश्वरस्य=स्वामिनः दिलीपस्य ॥ धर्मार्थं पत्नी धर्म्मपत्नी=सुदक्षिणा ॥ तस्याः=नन्दियाः ॥ खुराणाम्=शफानाम् । न्यासैः=निक्षेपैः । पवित्राः=पूताः । पांसु

वः=रेणवः यस्य तम् ॥ मार्गम्=पन्थानम् ॥ श्रुतेः=वेदस्य ॥ अर्थम्=भावं प्रयोजनं वा ॥ स्मृतिरिव ( जातावेकवचनम् )=मन्वादिप्रणीतधर्मशास्त्राणीव ॥ अन्वगच्छत्=पश्चाज्जगाम ॥ २ ॥

निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः ॥ पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥

यशोभिः=कीर्त्तिभिः ॥ सुरभिः=सुन्दरः ॥ दयालुः=कारुणिकः । 'स्याद्दयालुः कारुणिक' इत्यमरः । दयार्द्र इत्यर्थः ॥ राजा=दिलीपः ताम्=अमुम् ॥ दयिताम्=धर्मपत्नीं सुदक्षिणाम् ॥ निवर्त्य=परावर्त्य । पयोधरीभूता=स्तनीभूता । अपयोधराः पयोधराः सम्पद्यमानाः पयोधरीभूताः । अभूततद्भावेच्विः । 'कुगतिप्रादयः' इति समासः । चत्वारः=चतुःसङ्ख्याकाः । समुद्राः=पयोऽदधयः यस्यास्ताम् पूर्वोक्ताम् ॥ सुरभेः=कामधेनोरपत्यं स्त्री सौरभेयी तां सौरभेयीम्=नन्दिनीम् ॥ गोरूपधराम्=धेनुरूपधारिणीम् ॥ उर्वीमिव=भूमिमिव ॥ जुगोप=ररक्ष ॥ ३ ॥

व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः ॥ न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥

धेनोः=नन्दिन्याः ॥ अनुचरेण=दासेन ॥ तेन=दिलीपेन ॥ व्रताय=सन्तानार्थं व्रतमाचरितुं ॥ शेषोऽपि=पूर्वावशिष्टोऽपि ॥ अनुयायिवर्गः=अनुचरसमुदायः ॥ न्यषेधि=निवर्त्तितः ॥ तस्य=दिलीपस्य ॥ शरीररक्षा=देहाभिगुप्तिः ॥ अन्यतः न=पुरुषान्तरान्न ॥ हि=यस्माद्धेतोः ॥ मनोः ॥ प्रसूतिः=संततिः ॥ स्ववीर्येण=पराक्रमेण । गुप्ता=रक्षिता ( भवति ) ॥ ४ ॥

आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवा-

रणैश्च ॥ अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥ ५ ॥

सम्राट्=सार्वभौमः चक्रवर्ती वा ॥ सः=दिलीपः ॥ तृणानाम्=घासानाम् ॥ आस्वादवद्भिः=मधुरैः स्वादुयुक्तैरित्यर्थः ॥ कवलैः=ग्रासैः कण्डूयनैः=गात्रसंघर्षणैः । खर्जनैरित्यर्थः ॥ दंशानाम्=वनमाक्षिकाणाम् । निवारणैः=दूरीकरणैः ॥ अव्याहतैः=निरवरोधैः ॥ स्वैरगतैः=स्वच्छन्दगमनैश्च ॥ तस्याः=नन्दिन्याः ॥ समाराधनतत्परः=सेवातत्परः ॥ अभूत्=आसीत् ॥ ५ ॥

स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ॥ जलाभिलाषो जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥

भुवं पाति रक्षतीति भूपतिः=दिलीपः ॥ ताम्=गाम् ॥ स्थिताम्=स्थितवतीम् ( दृष्ट्वा ) ॥ स्थितः सन्=स्थितिं कुर्वन् सन् ॥ प्रयाताम्=गच्छन्तीम् ( दृष्ट्वा ) ॥ उच्चलितः=गच्छन् सन् ॥ निषेदुषीम्=निषण्णाम् ( दृष्ट्वा ) ॥ आसनबन्धधीरः=उपविष्टः सन् ॥ जलम्=पानीयम् ॥ आददानाम्=पिबन्तीं ( दृष्ट्वा )॥ जलाभिलाषी=जलं पिबन् सन् ॥ छायेव=प्रतिबिम्बमिव ॥ अन्वगच्छत्=पश्चाज्जगाम ॥ यथा छाया सर्वमनुकरोति तथैव राजापि तस्या अनुकरणपरो बभूवेति भावः ॥ ६ ॥

स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः ॥ आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ॥ ७ ॥

न्यस्तानि=त्यक्तानि । चिह्नानि=छत्रचामरादीनि लक्ष्माणि यस्यास्ताम् ( तथाभूतामपि )॥ तेजोविशेषेण=प्रतापाधिक्येन । अनुमिताम् उपलक्षिताम् ॥ राजलक्ष्मीम्=राजश्रियम् ॥ दधानः=धरन् ॥ सः=दिलीपः ॥ अनाविष्कृता=अस्फुटा । दानराजिः=मदरेखा यस्य ॥ अन्तः

=अभ्यन्तरे ॥ मदावस्था=मददशा यस्य ( तादृशः ) ॥ द्विपेन्द्र इव=करीव ॥ आसीत्=अभूत् ॥ ७ ॥

लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम् ॥ रक्षापदेशान्मुनिहोमधेनोर्वन्यान्विनेष्यन्निव दुष्टसत्वान् ॥ ८ ॥

लतानाम्=वल्लीनाम् । प्रतानैः=कुटिलतन्तुभिः । उद्ग्रथितैः=उन्नमय्य ग्रन्थितैः अथवा लताप्रतानवदुद्ग्रथितैः ॥ केशैः=कचैः ॥ अधिज्यं=आरोपितम् धनुः=कोदण्डं येन ॥ सः=स नृपः ॥ मुनेः=वसिष्ठस्य । होमस्य=हवनस्य । धेनुः तस्या होमधेनोः=नन्दिन्याः ॥ रक्षापदेशात्=रक्षणव्याजात् ॥ वन्यान्=वने भवा वन्यास्तान् आरण्यकान् ॥ दुष्टसत्त्वान्=हिंसकजन्तून् ॥ विनेष्यन्=शिक्षयिष्यन्निव ॥ दावं=वनम् ॥ विचचार=जगाम ॥ ८ ॥

विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ॥ उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥ ९ ॥

विसृष्टाः=परित्यक्ताः । पार्श्वानुचराः=निकटवर्त्तिनः सेवका येन । तस्य ॥ पाशभृता=वरुणेन ॥ समस्य=तुल्यस्य ॥ तस्य=दिलीपस्य ॥ पार्श्वद्रुमाः=निकटवर्त्तिनो वृक्षाः ॥ उन्मदानाम्=उत्कटमदानां हर्षपूर्णानामित्यर्थः ॥ वयसाम्=पक्षिणाम् ॥ विरावैः=शब्दैः हर्षध्वानिभिरित्यर्थः ॥ आलोकशब्दम्=जयशब्दम् ॥ उदीरयामासुरिव=कथयामासुरिव ॥ ९ ॥

मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ॥ अवाकिरन्बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥ १० ॥

मरुता=पवनेन । प्रयुक्ताः=प्रेरिताः । संचालिता इत्यर्थः ॥ बाललताः=अभिनववल्लर्यः ॥ मरुत्सखाभम्=वह्नितुल्यतेजसम् ॥ अर्च्यम्=

पूजार्हम् ॥ तम्=दिलीपम् आरात्=समीपे " आराद्दूर समीपयोः " इत्यमरः ॥ अभिवर्त्तमानम्=समुपस्थितम् ॥ प्रसूनैः=पुष्पैः ॥ आचारलाजैः=लाजाः भ्रष्टधान्यानि सत्कारलाजैरिव ॥ पौरकन्याः=नरबालिकाः ॥ अवाकिरन्=ववृषुः ॥ १० ॥

धनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः ॥ आलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः ॥ ११ ॥

धनुर्भृतोऽपि=धानुष्कस्यापि ॥ अस्य=राज्ञः ॥ विशङ्कैः=सन्देहरहितैः निर्भीकैरित्यर्थः ॥ अन्तःकरणैः=चेतोभिः । ( हरिणीनामिति भावः ) ॥ दयया=वात्सल्येन । आर्द्रः क्लिन्नः । भावः=अभिप्रायो यस्य तद्दयार्द्रभावम् । कोमलभावम् दयालुत्वमित्यर्थः ॥ आख्यातम्=वर्णितम् । ( तथाविधम् ) ॥ वपुः=शरीरम् ॥ आलोकयन्त्यः=पश्यन्त्यः ॥ हरिण्यः=मृग्यः ॥ अक्ष्णाम्=नेत्राणाम् ॥ प्रकामविस्तारफलम्=अत्यन्तदैर्घ्यलाभम् ॥ आपुः=लेभिरे ॥ ११ ॥

स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् ॥ शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥ १२ ॥

सः=दिलीपः ॥ मारुतेन=पवनेन । पूर्णानि=व्याप्तानि । रन्ध्राणि छिद्राणि येषां तैः ॥ ( अत एव ) कूजद्भिः=शब्दायमानैः । कीचकैः=वेणुविशेषैः ॥ आपादितं=वर्णितम् । वंशस्य=कुलस्य । कृत्यं=कार्यम् । यस्मिन् कर्मणि तत् ॥ उच्चैः=तारस्वरेण ॥ वनदेवताभिः=अरण्यदेवैः ॥ उद्गीयमानम्=उच्चार्यमाणम् ॥ स्वम्=स्वकीयम् ॥ यशः=कीर्तिम् ॥ कुञ्जेषु=लताग्रहेषु ॥ शुश्राव=श्रुतवान् ॥ १२ ॥

पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पग-

---

१ " कीचका नाम ते वंशा ये स्वनन्त्यनिलाहताः " इति लक्षणात् ।

न्धी ॥ तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ॥ १३ ॥

गिरिषु=पर्वतेषु । निर्झराणाम्=वारिप्रवाहाणाम् ॥ तुषारैः=सीकरैः यद्वा शीतलताभिः ॥ पृक्तः=क्लिन्नः युक्त इत्यर्थः ॥ अनोकहानाम्=वृक्षाणाम् । आकम्पितानि=ईषत्कम्पितानि । पुष्पाणि=कुसुमानि । तेषां यो गन्धः, सोऽस्यास्तीति ।( तथाभूतः ) पवनः=वायुः ॥ आतपेन=घर्मेण । क्लान्तम्=खिन्नम् ॥ अनातपत्रम्=छत्रहीनम् ॥ आचारपूतम्=सदाचारेण शुद्धम् ॥ तम्=दिलीपम् ॥ सिषेवे=सेवितवान् ॥ १३ ॥

शशाम वृष्ट्यापि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः ॥ ऊनं न सत्वेष्वधिको बबाधे तस्मिन्वनं गोप्तरि गाहमाने ॥ १४ ॥

गोप्तरि=रक्षके ॥ तस्मिन्=राज्ञि दिलीपे ॥ वनं=काननम् ॥ गाहमाने सति=विचरति सति ॥ वृष्ट्या विनापि=वर्षणमन्तरापि ॥ दवाग्निः=वनहुताशनः ॥ शशाम=शान्तोऽभूत् ॥ फलानाम्=वृक्षसंपत्तिनाम् । पुष्पाणाम्=कुसुमानाम् । वृद्धिः=समृद्धिः ॥ विशेष्यते इति विशेषा=अधिका ॥ आसीत्=अभूत् ॥ कर्मार्थे घञ् ॥ सत्त्वेषु=जीवेषु । 'यतश्च निर्धारणम्' इति सप्तमी ॥ अधिकः=प्रबलः ॥ ऊनम्=हीनबलम् निर्बलमिति भावः ॥ न बबाधे=नहि पीडितवान् ॥ १४ ॥

सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ॥ प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ १५ ॥

पल्लवानाम्=नूतनपत्राणाम् । यो रागः=वर्णस्तद्वत् ताम्रा=रक्तवर्णा ॥ पतङ्गस्य=सूर्यस्य ॥ प्रभा=कान्तिः ॥ मुनेः=वसिष्ठस्य ॥ धेनुः=नन्दिनी च ॥ दिगन्तराणि=आशाप्रान्तानि 'दिशस्तु ककुभः काष्ठा आशाश्च' इत्यमरः ॥ संचारेण=गमनेन । पूतानि=पवित्राणि ॥ कृत्वा=विधाय ॥

दिनान्ते=सायङ्काले ।। निलयाय=आश्रमाय ।। गन्तुम्=प्रयातुम् ।। प्रचक्रमे=इयेष । सन्नद्धा बभूवेत्यर्थः ।। १५ ।।

तां देवतापित्रतिथिक्रियार्थामन्वग्ययौ मध्यमलोकपालः ।। बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना ।। १६ ।।

मध्यमलोकपालः = मर्त्यलोकाधिपो दिलीपः ।। देवतानाम्=अमराणामिन्द्रादीनामित्यर्थः पितॄणाम् = मृतपूर्वपुरुषाणामित्यर्थः । अतिथीनाम् = अभ्यागतानाम् याः क्रिया यागश्राद्धदानानि ता एवार्थः प्रयोजनं यस्यास्तां=धेनुम् ।। अन्वग्ययौ=अनुजगाम ।। सा=धेनुश्च ।। सताम् सज्जनानाम् ।। मतेन=मान्येन ।। तेन=दिलीपेन विधिना=अनुष्ठानेन ।।- उपपन्ना=युक्ता ।। साक्षात्=प्रत्यक्षे ।। श्रद्धेव=भक्तिरिव प्रत्ययमतिरिवेत्यर्थः ।। बभौ=शुशुभे ।। १६ ।।

स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि ।। ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् ।। १७ ।।

सः=दिलीपः ।। पल्वलेभ्यः=अल्पसरोवरेभ्यः । उत्तीर्णानि=निर्गतानि । वराहाणाम्=शूकराणाम् यूथानि=समूहाः येषु तानि ।। आवासवृक्षाणाम्=निवासतरूणाम् उन्मुखाः=सम्मुखाः । बर्हिणो=मयूरा येषु तानि ।। मृगैः = हरिणैः अध्यासितानि=अधिष्ठितानि । शाद्वलानि=हरिततृणानि येषु तानि ।। श्यामायमनानि=अश्यामाश्यामानानि श्यामायमानानि भवन्ति तथोक्तानि । ‘ लोहितादिडाज्भ्यः क्यष् ’ इति क्यष् । ‘ वाक्यषः ’ =इत्यात्मनेपदे शानच् हरिद्वर्णानीत्यर्थः ।। वनानि=अरण्यानि पश्यन्=अवलोकयन् ।। ययौ=जगाम ।। १७ ।।

---

१ ‘ प्रत्ययो धर्मकार्येषु सा श्रद्धेत्यभिधीयते ’ इति स्मृतिः । अथवा— गुरुवेदान्तवाक्येषु विश्वासः श्रद्धा ।

आपीनभारोद्वहनप्रयत्नाद् गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः ॥
उभावलञ्चक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम् ॥ १८ ॥

आपीनस्य=ऊधसः । यो भारः=उद्वहनगौरवः । तस्य उद्वहने=उद्धरणे । प्रयत्नात्=प्रयासात् ॥ गृष्टिः=सकृत्प्रसूता गौः । नन्दिनीत्यर्थः ॥ नरेन्द्रः=दिलीपः ॥ वपुषः=शरीरस्य ॥ गुरुत्वात्=स्थौल्यात् ॥ उभौ=नन्दिनीदिलीपौ ॥ अञ्चिताभ्याम्=पूजिताभ्याम् ॥ गताभ्याम्=संचाराभ्याम् ॥ तपोवनस्य =तपश्चर्योऽरण्यस्य ॥ आवृत्तिपथम्=निवृत्तिमार्गम् ॥ अलञ्चक्रतुः=शोभितवन्तौ ॥ १८ ॥

वसिष्ठधेनोरनुयायिनं तमावर्त्तमानं वनितावनान्तात् ॥ पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥ १९ ॥

निमेषेषु=चक्षुषः स्वाभाविकस्पन्दनव्यापारेषु । अलसा=मन्दा—पक्ष्णाम् नेत्रावरकलोमानाम् । पङ्क्तिः=श्रेणिर्यस्याः सा ॥ वनिता=योषित् । सुदक्षिणेत्यर्थः ॥ वसिष्ठस्य=मुनेः । धेनोः=नन्दिन्याः ॥ अनुयायिनम्=सेवकम् ॥ वनान्तात्=अरण्यान्तात् ॥ आवर्त्तमानम्=प्रत्यागच्छन्तम् ॥ तम्=दिलीपम् ॥ उपोषिताभ्याम्=क्षुधिताभ्याम् । सतृष्णाभ्यामिति यावत्॥ लोचनाभ्याम्=नेत्राभ्याम् ॥ पपौ इव=पीतवती इव ॥ १९ ॥

पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या ॥ तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या ॥ २० ॥

वर्त्मनि=मार्गे ॥ पृथिव्या ईश्वरः, पार्थिवस्तेन पार्थिवेन=दिलीपेन ॥ 'तस्येश्वरः' इत्यञ् ॥ पुरस्कृता=अग्रे कृता । पार्थिवस्य=दिलीपस्य धर्मस्य पत्नी, धर्म्मपत्नी । तया धर्मपत्न्या=सुदक्षिणया ॥ प्रत्युद्गता=अग्रे नीता ॥ सा=पूर्वोक्ता ॥ धेनुः=नन्दिनी ॥ दिनक्षपयोः=दिवसनि-

शयोः । मध्यगता=अन्तर्गता ॥ सन्ध्या इव=दिवारात्रिसन्धिरिव ॥ तयोः सुदक्षिणादिलीपयोः । अन्तरे=मध्ये ॥ विरराज=शुशुभे ॥ २० ॥

प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षतपात्र-
हस्ता ॥ प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं
द्वारमिवार्थसिद्धेः ॥ २१ ॥

साक्षतपात्रौ=तण्डुलभाण्डयुक्तौ । हस्तौ=करौ यस्याः सा ॥ सुदक्षिणा=दिलीपपत्नी ॥ ताम्=पूर्वोक्ताम् ॥ पयस्विनीम्=धेनुं ॥ प्रदक्षिणीकृत्य=परिक्रम्य ॥ प्रणम्य=नमस्कृत्य च ॥ अर्थसिद्धेः=कार्यसाधनस्य ॥ द्वारमिव=प्रवेशमार्गमिव ॥ अस्याः=नंदिन्याः ॥ विशालम्=विस्तीर्णम् ॥ शृङ्गान्तरम्=शृङ्गमध्यम् भालमित्यर्थः ॥ आनर्च=पूजयामास ॥ २१ ॥

वत्सोत्सुकापि स्तिमिता सपर्यां प्रत्यग्रहीत्सेति नन-
न्दतुस्तौ । भक्त्योपपन्नेषु हि तद्विधानां प्रसाद-
चिह्नानि पुरःफलानि ॥ २२ ॥

सा=धेनुः ॥ वत्सोत्सुकापि=पुत्रोत्काण्ठितापि ॥ स्तिमिता=स्थिता ॥ सपर्यां=पूजाम् ॥ प्रत्यग्रहीत्=स्वीचकार ॥ इति=हेतोः ॥ तौ=सुदक्षिणादिलीपौ ॥ ननन्दतुः=जहर्षतुः ॥ हि=यतः ॥ तद्विधानाम्=नन्दिनीसदृशानाम् ॥ भक्त्या=श्रद्धया ॥ उपपन्नेषु=युक्तेषु । भक्तेष्वित्यर्थः ॥ प्रसादचिह्नानि=प्रसन्नतालक्षणानि ॥ पुरःफलानि=प्रथमसूचितानि ॥ ( भवन्ति ) ॥ २२ ॥

गुरोः सदारस्य निपीड्य पादौ समाप्य सान्ध्यं च
विधिं दिलीपः । दोहावसाने पुनरेव दोग्ध्रीं भेजे
भुजोच्छिन्नरिपुर्निषण्णाम् ॥ २३ ॥

भुजाभ्याम्=बाहुभ्याम् । उच्छिन्नाः=विनाशिताः । रिपवः=अरयः येन सः ॥ दिलीपः=नृपः ॥ सदारस्य=सपत्नीकस्य ॥ गुरोः=वसिष्ठस्य ॥

पादौ=चरणौ । निपीड्य=सेवित्वा । नमस्कृत्येत्यर्थः ॥ सान्ध्यम्=सन्ध्यासंबंधिनीं ॥ विधिम्=भगवदाराधनक्रियां ॥ समाप्य=विधाय ॥ दोहावसाने=दोहनानन्तरम् ॥ पुनरेव =भूयोऽपि ॥ निषण्णाम्=आसीनाम् ॥ दोग्ध्रीम्=धेनुम् ॥ भेजे=सिषेवे ॥ २३ ॥

तामन्तिकन्यस्तबलिप्रदीपामन्वास्य गोप्ता गृहिणीसहायः ॥ क्रमेण सुप्तामनु संविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥ २४ ॥

गृहिणीसहायः । गृहिणी=पत्नी एव सहायः=सहचरः यस्य सः। सपत्नीक इति भावः ॥ गोप्ता=रक्षकः ॥ द्वितीय इत्यर्थः ॥ अन्तिके=निकटे । न्यस्ताः=स्थापिताः । बलयः=भोजनार्थं तृणादीनि । प्रदीपाश्च=प्रकाशसाधनानि च यस्यास्ताम् ॥ ताम् =नन्दिनीम् ॥ अन्वास्य=सेवित्वा ॥ क्रमेण=क्रमशः ॥ सुप्ताम्=निद्रिताम् ॥ अनु=पश्चात् ॥ संविवेश=सुष्वाप ॥ प्रातः=उषसि ॥ सुप्तोत्थिताम्=त्यक्तनिद्रावस्थाम् ॥ अनु=अनन्तरम् ॥ उदतिष्ठत्=उत्थितोऽभवत् ॥ २४ ॥

इत्थं व्रतं धारयतः प्रजार्थं समं महिष्या महनीयकीर्त्तेः ॥ सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य ॥ २५ ॥

इत्थम्=अनेन प्रकारेण ॥ प्रजार्थम्=संतानार्थम् ॥ महिष्या=सुदक्षिणया । 'महिषी कृताभिषेकायां' इत्यमरः ॥ समम्=सार्द्धम् ॥ व्रतम्=गोसेवनरूपनियमम् ॥ धारयतः=पालयतः ॥ महनीया=पूजनीया । कीर्त्तिः=यशः यस्य । तस्य ॥ दीनानाम्=दरिद्राणाम् । उद्धरणे=दैन्यविमोचने । उचितस्य=योग्यस्य ॥ तस्य=दिलीपस्य ॥ त्रयोगुणा आवृत्तयो येषां तानि त्रिगुणानि=त्रिरावृत्तानि ॥ सप्त=सप्तसङ्ख्याकानि ॥ दिनानि=एकविंशतिदिनानीत्यर्थः ॥ व्यतीयुः=अतिक्रान्तानि ॥ २५ ॥

अन्येद्युरात्माऽनुचरस्य भावं जिज्ञासमाना मुनिहो-

मधेनुः ॥ गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्व-
रमाविवेश ॥ २६ ॥

अन्येद्युः=द्वाविंशतिदिने ॥ मुनेः=वसिष्ठस्य । होमधेनुः=नन्दिनी ॥ आत्मानुचरस्य=निजसेवकस्य नृपस्य ॥ भावम्=आभिप्रायम् । भक्तिभावमिति यावत् ॥ जिज्ञासमाना=ज्ञातुमिच्छन्ती । 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम् । ततश्शानच् ॥ गङ्गायाः=भागीरथ्याः । प्रपातेन=पतनेन । अन्ते=समीपे । विरूढानि=उद्गतानि । शष्पाणि=बालतृणानि यस्मिंस्तत् ॥ गौरीगुरोः=हिमालयस्य ॥ गह्वरम्=गुहाम् ॥ आविवेश=प्रविवेश ॥ २६ ॥

सा दुष्प्रधर्षा मनसाऽपि हिंस्रैरित्यद्रिशोभाप्रहितेक्ष-
णेन ॥ अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः
किल तां चकर्ष ॥ २७ ॥

सा =धेनुः ॥ हिंस्रैः=व्याघ्रादिभिः हिंसकजीवैः ॥ मनसाऽपि=चेतसाऽपि ॥ दुष्प्रधर्षा=दुर्धर्षा ॥ इति=हेतोः ।अद्रेः=पर्वतस्य । शोभासु=छविषु । प्रहितेक्षणेन=दत्तदृष्टिना ॥ नृपेण=दिलीपेन ॥ अलक्षितम्=अज्ञातम् । अभ्युत्पतनम्=आभिमुख्येनोत्पतनम् यस्य सः॥ सिंहः=मृगेन्द्रः॥ ताम्=धेनुम् ॥ प्रसह्य=हठात् ॥ किल=निश्चयेन॥ चकर्ष=आकृष्टवान्॥२७॥

तदीयमाक्रन्दितमार्तसाधोर्गुहानिबद्धप्रतिशब्ददी-
र्घम् ॥ रश्मिष्विवादाय नगेन्द्रसक्तां निवर्तयामास
नृपस्य दृष्टिम् ॥ २८ ॥

गुहायाम् =कन्दरायाम् । निबद्धेन=प्रतिबद्धेन । प्रतिशब्देन=प्रतिध्वनिना । दीर्घम्=महत् ॥ तस्या इदं तदीयम्=धेनुसम्बन्धि ॥ आक्रन्दितम्=करुणक्रन्दनम् ॥ आर्त्तेषु=दुःखितेषु शरणागतेषु वा । साधोः=हितकारिणः ॥ नृपस्य=दिलीपस्य॥ नगेन्द्रे=हिमाद्रौ सक्त.=निबद्धा ताम्॥

दृष्टिम्=नेत्रम् ॥ रश्मिषु=प्रग्रहेषु अश्वाद्यवरोधरज्जुषु वा ॥ आदाय=गृहीत्वेव ॥ निवर्त्तयामास=प्रतिनिवृत्ताञ्चकार ॥ २८ ॥

स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श ॥ अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥ २९ ॥

धनुर्धरः=कोदण्डधारी । सः=दिलीपः ॥ पाटलायाम्=रक्तवर्णायाम् । गवि=धेनौ धेनोरुपरीत्यर्थः ॥ तस्थिवांसम्=स्थितम् । ( क्वसुश्चेति क्वसुप्रत्ययः ) केसरिणम्=सिंहम् । सानुमतः अद्रेः धातुमय्याम् गैरकादि धातुमत्याम् ॥ अधित्यकायाम्=ऊर्ध्वभूमौ । ( उपाधिभ्यां त्यकन्नासन्नारूढयोरिति त्यकन्प्रत्ययः ) प्रफुल्लम्=विकसितम् । 'फुल्ल-विकसेन इति धातोः पचाद्यच् ) लोध्रद्रुमम्=वृक्षविशेषमिव ॥ ददर्श=अवलोकयामास ॥ २९ ॥

ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः ॥ जाताभिषङ्गो नृपतिर्निषङ्गादुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ॥ ३० ॥

ततः=सिंहावलोकनानन्तरम् ॥ मृगेन्द्रस्येव गमनं यस्य सः मृगेन्द्रगामी=सिंहानुयायी ॥ शरणे साधुः, शरण्यः=( तत्र साधुरिति यत् ) शरणागतवत्सलः ॥ प्रसभेन=बलात्कारेण । उध्दृताः=विनाशिताः । अरयः=शत्रवो येन सः ॥ नृपतिः=राजा दिलीपः । जाताभिषङ्गः पराभवो यस्य सः=प्राप्तपराभवः सन् ॥ वध्यस्य=मारणीयस्य । ( दण्डादिभ्यो यः, इति यः प्रत्ययः ) मृगाणामिन्द्रः मृगेन्द्रः, तस्य मृगेन्द्रस्य=सिंहस्य ॥ वधाय=नाशाय निषङ्गात् =तूणीरात् ॥ शरम्=बाणम् उद्धर्तुम्=आक्रष्टुम् । ऐच्छत्=अकामयत ॥ ३० ॥

वामेतरस्तस्य करो देवदारुं पुत्रीकृतोऽसौ वृषभध्वज·
सक्ताङ्गुलिः सायककुम्भस्तनानिःसृतानां स्कन्दस्य
तस्थे ॥ ३१ ॥ रसज्ञः ॥ ३६ ॥

प्रहर्तुः=प्रहारं कु[illegible] इमम् । देवदारुम्=वृक्षविशेषम् । पश्यसि=
करः=हस्तः । [illegible]दारुः । वृषभध्वजेन=शिवेन । पुत्रीकृतः=पुत्रत्वेन
गुल्यवयवानाम् [illegible]भावे च्विः ) यः=देवदारुः । स्कन्दस्य=कार्त्ति-
समलंकृतानीत्यर्थे [illegible] पार्वत्या इत्यर्थः । हेम्नः=सुवर्णस्य । कुम्भः
यस्य तस्मिन् ॥ [illegible] कुचः । तस्मान्निसृतानाम्=निर्गतानाम् पयसाम्=
कंकः-करतु [illegible] । रसज्ञः=स्वादज्ञः आस्ति ॥ ३६ ॥
तस्मिन्, सायक[illegible] कटं कदाचिद्वन्यद्विपेनोन्मथिता
लयो यस्य स [illegible]थैनमद्रेस्तनया शुशोच सेनान्यमा·
चित्रलिखितशरो[illegible]ढं ॥ ३७ ॥

वाहुप्र[illegible]न् समये । कटम्=गण्डस्थलम् । कण्डूयमानेन=
राजा [illegible]दिभ्यो यक् ततश्शानच् ) वन्यद्विपेन=आरण्यकग·
विर्यः ॥ [illegible] । त्वक्=त्वचा चर्म वा । उन्मथिता=उत्पाटिता ।
[illegible]द्रेः=हिमालयस्य । तनया=दुहिता पार्वतीत्यर्थः । असु·
बाहोः=[illegible] । आलीढम्=विद्धम् । सेनान्यम्=स्वामिकार्त्तिकेयमिव
क्रोधः । रा[illegible] शुशोच=दुःखिताभूत् ॥ ३७ ॥
राधकारिण[illegible]
राक्षसैः । [illegible] वनद्विपानां त्रासार्थमस्मिन्नहमद्रि-
क्षिः ॥ [illegible]पारितः शूलभृता विधाय सिंहत्वम-
तमागतसत्त्ववृत्ति ॥ ३८ ॥

विरमा[illegible] प्रभृतिरादिर्यस्मिन्कर्माणि तत् । एव=हि वनद्विपानाम्
[illegible] । त्रासार्थम्=भयहेतोः । शूलभृता=शंभुना । अंकम्=समी-
गाद [illegible]नामाः ॥ सत्वाः=प्राणिनः एव वृत्तिः=जीवनं यस्मिन्
निगृहीना[illegible]
आर्याणाम्=[illegible]

दृष्टिम्=नेत्रम् ॥ रश्मिषु=प्रग्रहेषु अश्वाद्यवरोधरज्जुषु वा ॥ आदाय= गृहीत्वेव ॥ निवर्त्तयामास=प्रतिनिवृत्ताञ्चकार ॥ २८ ॥

स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श ॥ अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥ २९ ॥

धनुर्धरः=कोदण्डधारी । सः=दिलीपः ॥ पाटलायाम्=रक्तवर्णायाम् । गवि=धेनौ धेनोरुपरीत्यर्थः ॥ तस्थिवांसम्=स्थितम् । ( क्वसुश्चेति क्वसुप्रत्ययः ) केसरिणम्=सिंहम् । सानुमतः अद्रेः धातुमय्याम् गैरकादि धातुमत्याम् ॥ अधित्यकायाम्=ऊर्ध्वभूमौ । ( उपाधिभ्यांत्यकन्नासन्नारूढयोरिति त्यकन्प्रत्ययः ) प्रफुल्लम्=विकसितम् । 'फुल्लविकसेन इति धातोः पचाद्यच् ) लोध्रद्रुमम्=वृक्षविशेषमिव ॥ ददर्श= अवलोकयामास ॥ २९ ॥

ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः ॥ जाताभिषङ्गो नृपतिर्निषङ्गादुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ॥ ३० ॥

ततः=सिंहावलोकनानन्तरम् ॥ मृगेन्द्रस्येव गमनं यस्य सः मृगेन्द्रगामी=सिंहानुयायी ॥ शरणे साधुः, शरण्यः=( तत्र साधुरिति यत् ) शरणागतवत्सलः ॥ प्रसभेन=बलात्कारेण । उध्दृताः=विनाशिताः । अरयः=शत्रवो येन सः ॥ नृपतिः=राजा दिलीपः । जातोभिषङ्गः पराभवो यस्य सः=प्राप्तपराभवः सन् ॥ वध्यस्य=मारणीयस्य । ( दण्डादिभ्यो यः, इति यः प्रत्ययः ) मृगाणामिन्द्रः मृगेन्द्रः, तस्य मृगेन्द्रस्य=सिंहस्य ॥ वधाय=नाशाय निषङ्गात्=तूणीरात् ॥ शरम्=बाणम् उद्धर्तुम्=आकृष्टुम् । ऐच्छत्=अकामयत ॥ ३० ॥

वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुँख एव चित्रार्पितारम्भइवाव-
तस्थे ॥ ३१ ॥

प्रहर्तुः=प्रहारं कुर्वतः । तस्य=दिलीपस्य । वामेतरः=दक्षिणः करः=हस्तः । नखानाम् न खमाकाशं छिद्रं वा विद्यते एतेषां=अङ्गुल्यवयवानाम् प्रभाभिः=कान्तिभिः । भूषितानि=विच्छुरितानि समलंकृतानीत्यर्थः । कङ्कस्य=पक्षिविशिष्टस्य । पत्राणि पुंखानि यस्य तस्मिन् ॥ कङ्कः पक्षिविशेषे स्याद् गुप्ताकारे युधिष्ठिरे इति विश्वः । कंकः-करतु कर्कट इतियादवः । सायकस्य पुंखः, सायकपुंखः, तस्मिन्, सायकपुंखे=बाणमूले । सक्ताः लग्नाः=स्थिरा वा । अङ्गुलयो यस्य स सक्ताङ्गुलिः=लग्नाङ्गुलिः सन् । चित्रार्पितारम्भः=चित्रलिखितशरोद्धरणोद्योगवानिव । अवतस्थे=स्थितवान ॥ ३१ ॥

बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ॥
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्ध-
वीर्यः ॥ ३२ ॥

बाह्वोः=हस्तयोः । प्रतिष्टम्भेन=अवरोधेन । विवृद्धमन्युः वर्धितक्रोधः । राजा=दिलीपः । अभ्यर्णम्=समीपवर्तिनं आगस्कृतम्=अपराधकारिणम् । अस्पृशद्भिः=अप्रहरद्भिरित्यर्थः । स्वतेजोभिः=निजपराक्रमैः । मन्त्रौषधिभ्याम्=जप्यागदाभ्याम् । रुद्धवीर्यः—अवरुद्धशक्तिः ॥ भोगीव=सर्पइव । अन्तः=मध्ये ॥ अदह्यत—अतपत ॥ ३२ ॥

तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ॥
विस्माययन्विस्मितमात्मवृत्तौ सिंहोरुसत्वं निज-
गाद सिंहः ॥ ३३ ॥

निगृहीता=आक्रान्ता । धेनुः=नन्दिनी येन सः । सिंहः केसरी । आर्य्याणाम्=श्रेष्ठानाम ॥ गृह्यम्=पक्ष्यम् । ( पदा स्वरि बाह्या पक्ष्येषु

चेतिक्यप् ) सन्मान्यनित्यर्थः मनोः=मनुराज्ञः ॥ वंशस्य=कुलस्य । केतुम्=पताकारूपं श्रेष्ठत्वात् ॥ सिंहोरुसत्वम्=सिंहइव महाबलम् । आत्मवृत्तौ=बाहुप्रतिष्टंभरूपस्वव्यापारे । विस्मितम् =साश्चर्यम् ॥ तम्=दिलीपम् । मनुष्यवाचा=नगिरा । विस्माययन्-आश्चर्यमुत्पादयन्। निजगाद=उवाच ॥ ३३ ॥

अलं महीपाल ! तव श्रमेण प्रयुक्तमप्यस्त्रमितो-
वृथा स्यात् ॥ न पादपोन्मूलनशक्तिरंहः शिलो
च्चये मूर्च्छति मारुतस्य ॥ ३४ ॥

हे महीपाल ! =भो राजन् ! ॥ तव=भवतः ॥ श्रमेण=प्रयासेन । अलम्=पर्याप्तं साध्यं नास्तीत्यर्थः । इतः=अस्मिन् मयि ॥ प्रयुक्तमपि-प्रेरितमपि। अस्त्रम्=क्षेप्य प्रहरणम । वृथा स्यात्-निष्फलं भवेत् । पादपस्य=तरोः ॥ उन्मूलने=उत्पाटने । शक्तिः=सामर्थ्यं यस्य तत् । मारुतस्य =पवनस्य । रंहः=वेगः । शिलोच्चये=पर्वते । नमूर्छति=नहि प्रसरति ॥ ३४ ॥

कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ॥
अवेहि मां किंकरमष्टमूर्तेः कुंभोदरं नामनिकुम्भ-
मित्रम् ॥ ३५ ॥

कैलास गौरम्=कैलासस्तदाख्यः पर्वत इव गौरः शुभ्रवर्णस्तम । वृषम्=वृषभम् नन्दिनमितिभावः । आरुरुक्षोः=आरोढुमिच्छोः ॥ अष्टमूर्त्तेः=शिवस्य । पादार्पणम्=चरणन्यासः स एवाऽनुग्रहः प्रसादस्तेन । पूतम्=पवित्रम् । पृष्ठम्=पृष्ठभागं कटिप्रदेशं यस्यतम् । निकुम्भमित्रम्=निकुम्भस्य । सुहृदम् कुम्भोदरं नाम=कुम्भोदराभिधम् । माम्=सिंहम् । किंकरम्=सेवकम् । अवेहि=जानीहि ॥ ३६ ॥

---

१ क्षितिर्जलं तथा तेजो वायुराका शमेवच । यष्टार्कश्च तथा चन्द्रः मूर्तयोऽष्टौ पिनाकिनः ॥

अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ॥ यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥ ३६ ॥

पुरः=अग्रे । अमुम्=इमम् । देवदारुम्=वृक्षविशेषम् । पश्यसि=ईक्षसे । असौ=अयं देवदारुः । वृषभध्वजेन=शिवेन । पुत्रीकृतः=पुत्रत्वेन स्वीकृतः । ( अभूततद्भावे च्विः ) यः=देवदारुः । स्कन्दस्य=कार्त्तिकेयस्य । मातुः=जनन्याः पार्वत्या इत्यर्थः । हेम्नः=सुवर्णस्य । कुम्भः कलशः=स एव स्तनः=कुचः । तस्मान्निसृतानाम्=निर्गतानाम् पयसाम्=जलरूपाणां क्षीराणाम् । रसज्ञः=स्वादज्ञः आस्ति ॥ ३६ ॥

कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ॥ अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७ ॥

कदाचित्=एकस्मिन् समये । कटम्=गण्डस्थलम् । कण्डूयमानेन=खर्जयता । ( कण्ड्वादिभ्यो यक् ततश्शानच् ) वन्यद्विपेन=आरण्यकगजेन । अस्य=देवदारोः । त्वक्=त्वचा चर्म वा । उन्मथिता=उत्पाटिता । अथ=अनन्तरम् । अद्रेः=हिमालयस्य । तनया=दुहिता पार्वतीत्यर्थः । असुरास्त्रैः=दैत्यप्रहरणैः । आलीढम्=विद्धम् । सेनान्यम्=स्वामिकार्त्तिकेयमिव एनम्=देवदारुम् । शुशोच=दुःखिताभूत् ॥ ३७ ॥

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ॥ व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्ववृत्ति ॥ ३८ ॥

तदा=तत्कालः प्रभृतिरादिर्यस्मिन् कर्मणि तत् । एव=हि वनद्विपानाम् =अरण्यगजानाम् । त्रासार्थम्=भयहेतोः । शूलभृता=शंभुना । अङ्कम्=समीपम् । आगताः=प्राप्ताः ॥ सत्वाः=प्राणिनः एव वृत्तिः=जीवनं यस्मिन्

तत् । सिंहत्वम्=मृगेन्द्रत्वम् । विधाय=कृत्वा । अस्मिन्=प्रागुक्ते एतस्मिन् । अद्रिकुक्षौ=गिरिगह्वरे । अहम्=सिंहः । व्यापारितः=नियुक्तः ॥ ३८ ॥

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ॥ उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥ ३९ ॥

परमेश्वरेण=शिवेन । प्रदिष्टः=प्रदर्शितः । कालः=अवसानसमयो यस्याः सा । उपस्थिता=प्राप्ता । एषा=गोरूपा । शोणितस्य=रुधिरस्य । पारणा=व्रतान्तभोजनम् । सुरद्विषः=राहोः । चान्द्रमसी=चन्द्रसम्बन्धिनी । सुधेव=अमृतमिव । तस्य=प्रागुक्तस्य । क्षुधितस्य=बुभुक्षितस्य । मे=मम । तृप्त्यै=तर्पणाय क्षुधानिवारणायेत्यर्थः । अलम्=पर्याप्ता अस्ति ॥ ३९ ॥

स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः ॥ शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ॥ ४० ॥

सः=रक्षणोपायशून्यः । त्वम्=भवान् । लज्जाम्=ह्रियम् । विहाय=त्यक्त्वा । निवर्तस्व=स्वनिलयं प्रति गच्छ । भवान्=त्वं दिलीपः । गुरोः=वसिष्ठस्य । दर्शिता=प्रकाशिता । शिष्यस्य=अन्तेवासिनः । भक्तिः=श्रद्धा येन सः प्रदर्शितशिष्यकर्त्तव्य इति भावः । अस्ति । यत्=वस्तु । शस्त्रेण=आयुधेन । रक्ष्यम्=रक्षणीयम् । किन्तु अशक्यरक्ष्यम्=रक्षितुमशक्यम् । तच्छस्त्रभृताम्=आयुधधारिणाम् । यशः=कीर्तिम् । न क्षिणोति=नो हिनस्ति ॥ ४० ॥

इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ॥ प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥ ४१ ॥

गिरिशस्य=शिवस्य । प्रभावात्=प्रतापात् । प्रत्याहतास्त्रः=अवरुद्ध-प्रहरणः निष्फलप्रयासः सन् । पुरुषाधिराजः=नरेन्द्रो दिलीपः । इति =पूर्वोक्तम् । प्रगल्भम्=प्रौढम् । मृगाधिराजस्य=सिंहस्य । वचः=वाक्यम् । निशम्य=श्रुत्वा । आत्मनि=स्वविषये । अवज्ञाम्=अपमानम् । शिथिलीचकार=तत्याज ॥ ४१ ॥

प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्नः॥
जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्र-
पाणिः ॥ ४२ ॥

स एव पूर्वः=प्रथमः । भङ्गः=प्रतिबन्धो यस्य तस्मिन् । इषुप्रयोगे=बाणव्यापारे । वितथप्रयत्नः=निष्फलप्रयासः सन् । वज्रम्=कुलिशम् । मुमुक्षन्=प्रहर्तुमिच्छन् । त्रीणि अम्बकानि=लोचनानि यस्य असौ, त्र्यम्बकः=शिवः । तस्य वीक्षणेन=अवलोकनेन । जडीकृतः=स्थिरीकृतः । वज्रपाणिः=इन्द्र इव । एनंप्रति=सिंहंप्रति । अब्रवीत्=अवोचत् ॥ ४२ ॥

संरुद्धचेष्टस्य मृगेन्द्र ! कामं हास्यं वचस्तद्यदहं
विवक्षुः ॥ अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भा-
वमतोऽभिधास्ये ॥ ४३ ॥

मृगेन्द्र !=हे सिंह ! । संरुद्धचेष्टस्य=प्रतिबद्धव्यापारस्य । तद्वचः=तद्वाक्यम् । कामम्=अत्यर्थम् । हास्यम्=हसनीयम् । यद्वचः=वाक्यं । अहम्=दिलीपः । विवक्षुः=वक्तुमिच्छुः । अस्मि । हि=यस्माद्धेतोः । प्राणभृताम्=शरीरधारिणाम् । भवान्=त्वं सिंहः । अन्तर्गतम्=मनोगतम् । सर्वम्=अखिलम् । भावम्=अभिप्रायम् । वेद=जानाति । अतोऽभिधास्ये=एतदर्थं कथयिष्ये ॥ ४३ ॥

मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहार-
हेतुः ॥ गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्ताद-
नुपेक्षणीयम् ॥ ४४ ॥

स्थावराणाम्=तरुपर्वतादीनामचलानाम् । जङ्गमानाम्=मनुष्यादीनां गमनशीलानाम् । सर्गस्य=सृष्टेः । स्थितेः=पालनस्य । प्रत्यवहारस्य=प्रलयस्य । हेतुः=कारणम् । सः=शिवः । मे=मम । मान्यः=पूज्यः अस्ति । आहिताग्नेः=आहितः स्थापितोऽग्निर्वह्निर्येन तस्य, अग्निहोत्रिणः । गुरोः=शिक्षकस्य वसिष्ठस्याऽपि । इदम्=गोरूपम् । धनम्=वित्तम् । पुरस्तात्=अग्रे । नश्यत्=नाशंगच्छत् । अनुपेक्षणीयम्=अनवलोकनीयमस्ति ॥ ४४ ॥

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ॥
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं
महर्षेः ॥ ४५ ॥

सोऽङ्कागतसत्त्ववृत्तिस्त्वम् । मदीयेन=मत्सम्बन्धिना । देहेन=शरीरेण । शरीरस्य=वपुषः । वृत्तिम्=जीवनम् । निर्वर्त्तयितुम्=सम्पादयितुम् । प्रसीद=प्रसन्नो भव । दिनस्य=अह्नः । अवसाने=अन्ते सायङ्काले इत्यर्थः । उत्सुकः=उत्कण्ठितः । बालः=किशोरः । वत्सः=शिशुः । यस्या असौ । इयम्=एषा । महर्षेः=वसिष्ठस्य । धेनुः=नंदिनी । विसृज्यताम्=त्यज्यताम् ॥ ४५ ॥

अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि
कुर्वन् ॥ भूयः स भूतेश्वरपार्श्ववर्ती किञ्चिद्विहस्या-
र्थपतिं बभाषे ॥ ४६ ॥

अथ=अनन्तरम् । भूतेश्वरस्य=शिवस्य । पार्श्ववर्त्ती=सेवकः । सः=सिंहः । गिरेः=हिमाद्रेः । गह्वराणाम्=गुहानाम् । अन्धकारम्=तमः । दंष्ट्रामयूखैः=दन्तकान्तिभिः । शकलानि=खण्डानि । कुर्वन्=विदधन् । किञ्चिद्=ईषद् । विहस्य=हास्यं कृत्वा । अर्थपतिम्=राजानम् । भूयः=पुनः । बभाषे=ऊचे ॥ ४६ ॥

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं

वपुश्च ॥ अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥ ४७ ॥

एकातपत्रम्=एकच्छत्रम् सार्वभौमामिति यावत् । जगतः=संसारस्य । प्रभुत्वम्=आधिपत्य । नवम्=नूतनम् । वयः=अवस्थाम् । इदम्=एतद् । कान्तम्=मनोहारि । वपुः=शरीरञ्च । अल्पस्य=न्यूनस्य । हेतोः=कारणात् । बहु=प्रभूतं । हातुम्=त्यक्तुम् । इच्छन्=वाञ्छन् । त्वम्=दिलीपः । मे=मम । विचारे=कार्याकार्यविमर्शे । मूढः=मूर्खः । प्रतिभासि=लक्ष्यसे ४७

भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ॥ जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ ! पितेव पासि ॥ ४८ ॥

येत् यदि तव=भवतः । भूतेषु=प्राणिषु अनुकम्पा=दया । तर्हि इयम्=एषा । एका=केवला । गौः=धेनुः नन्दिनी । त्वदन्ते=तव विनाशे । स्वस्तिमती=कल्याणवती । भवेत्=स्यात् । हे प्रजानाथ ! =हे प्रजेश्वर ! त्वं । जीवन्=प्राणान् धारयन् सन् । पुनः=भूयः । पितेव= जनक इव । प्रजाः=लोकान् । उपप्लवेभ्यः=विघ्नेभ्यः । शश्वत्=सर्वदा । पासि=रक्षसि ॥ ४८ ॥

अथैकधेनोरपराधचण्डाद्गुरोः कृशानुप्रतिमाद्बिभेषि ॥ शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥ ४९ ॥

अथ=अनन्तरम् । एकधेनोः=एका एव धेनुर्यस्य तस्य केवलनन्दिनीकस्य । अपराधे=गवोपेक्षारूपे । चण्डात्=अतिकोपनात् । कृशानुप्रतिमात्=वह्नितुल्यात् । गुरोः=वसिष्ठात् । बिभेषि=भयं करोषि । अस्य= गुरोः । मन्युः=क्रोधः । घट इवोधांसि यासां ता घटोध्नीः=घटसदृशोधसः । कोटिशः=अनेकशः । गाः=धेनूः । स्पर्शयता=प्रतिपादयता ददतेत्यर्थः । भवता=त्वया । विनेतुम्=दूरीकर्त्तुम् । शक्यः=योग्यः अस्ति ॥ ४९ ॥

तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ॥ महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥ ५० ॥

तत्=तस्मात् कारणात् । कल्याणपरम्पराणाम्=मङ्गलश्रेणीनाम् । भोक्तारम्=अनुभवितारम् । ऊर्जस्वलम्=बलवन्तम् । आत्मदेहम्=स्वशरीरम् । रक्ष=पालय । हि=यस्मात् कारणात् । ऋद्धम्=समृद्धम् । राज्यम्=आधिपत्यमितिभावः । महीतलस्पर्शनमात्रेण=भूमिसम्बन्धमात्रेण । भिन्नम्=पृथग्भूतम् । ऐन्द्रम्=इन्द्रसम्बन्धि । पदम्=स्थानम् । आहुः=कथयन्ति ॥ ५० ॥

एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन ॥ शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ॥ ५१ ॥

मृगेन्द्रे=सिंहे । एतावत्=एतन्मात्रम् । उक्त्वा=कथयित्वा । विरते=निवृत्ते सति । अस्य=सिंहस्य । गुहागतेन=कन्दराव्याप्तेन । प्रतिस्वनेन=प्रतिध्वनिना । शिलोच्चयोऽपि=पर्वतोऽपि । प्रीत्या=प्रेम्णा । तमेव=प्रागुक्तमेव । अर्थम्=भावम् । क्षितिपालम्=नृपतिम् । उच्चैः=तारस्वरेण । अभाषतेव=अवोचादिव ॥ ५१ ॥

निशम्य देवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच ॥ धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः ॥ ५२ ॥

सुतराम्=अत्यन्तं । दयालुः=कृपालुः । मनुष्यदेवः=नरनाथो दिलीपः । देवानुचरस्य=शिवसेवकस्य सिंहस्य । वाचम्=वचनम् । निशम्य=श्रुत्वा । तेन=सिंहेन । तदध्यासितम्=व्याक्रमितम् । तेन कातरे=भयचकिते । अक्षिणी=लोचने यस्यास्तया । धेन्वा=नन्दिन्या । निरीक्ष्यमाणः=अवलोक्यमानः । पुनरपि=भूयोऽपि । उवाच=अब्रवीत् ॥ ५२ ॥

क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुव-
नेषु रूढः ॥ राज्येन किं तद्विपरीतवृत्तेः प्राणैरुप-
क्रोशमलीमसैर्वा ॥ ५३ ॥

क्षतात्=दुःखात् । त्रायते=रक्षति । इति=एतदर्थयुक्तः । उदग्रः=सर्वोत्तमः । क्षत्रस्य=राजन्यस्य । शब्दः=वाचकः । भुवनेषु=लोकेषु । किल=निश्चयेन । रूढः=प्रसिद्धः अस्ति । तस्य=क्षत्रशब्दस्य । विपरीतवृत्तेः=विरुद्धाचरणस्य । राज्येन=पालनीयविषयेण । वा=अथवा । उपक्रोशेन=जुगुप्सया । मलीमसैः=मलिनैः । प्राणैः=असुभिः । किं प्रयोजनमस्ति ? अपि तु किमपि नास्तीतिभावः ॥ ५३ ॥

कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपय-
स्विनीनाम् ॥ इमामनूनां सुरभेरवेहि रुद्रौजसा
तु प्रहृतं त्वयास्याम् ॥ ५४ ॥

महर्षेः=वसिष्ठस्य । अनुनयः=क्रोधोपनयः । अन्यासाम्=एतद्व्यतिरिक्तानाम् । पयस्विनीनाम्=गवाम् । विश्राणनात्=दानाच्च । कथम्=केन प्रकारेण । नु शक्यः=नु साध्यः । इमाम्=एताम् धेनुम् । सुरभेः=कामधेनोः । अनूनाम्=अहीनाम् । अवेहि=जानीहि । अस्याम्=गवि धेनोरुपरीत्यर्थः । त्वया=शिवानुचरेण । प्रहृतं तु=प्रहारस्तु । रुद्रौजसा=शिवबलेन । नतु स्वयमित्यर्थः ॥ ५४ ॥

सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं
भवत्तः ॥ न पारणा स्याद्विहिता तवैवं भवेदलु-
प्तश्च मुनेः क्रियार्थः ॥ ५५ ॥

सा=प्रागुक्ता । इयम्=एषा गौः । स्वस्य=आत्मनः । देहार्पणमेव=शरीरदानमेव । निष्क्रयेण=मूल्येन । भवत्तः=त्वत्तः । मया=दिलीपेन । मोचयितुम्=त्याजयितुम् । न्याय्या=योग्या । एवम्=अमुना प्रकारेण । तव=क्षुधितस्य । पारणा=व्रतान्तभोजनम् । विहता=नष्टा । न स्यात्=नो

भवेत् । मुनेः=वसिष्ठस्य च । क्रियार्थः=होमादिसाधनरूपार्थः । अलुप्तः =अनष्टः संपन्न इति यावत् । भवेत् स्यात् ॥ ५५ ॥

भवानपीदं परवानवैति महान् हि यत्नस्तव देवदारौ ॥ स्थातुं नियोक्तुर्नहि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ॥ ५६ ॥

परवान्=पराधीनः । भवानपि=त्वमपि सिंहः । इदम्=वक्ष्यमाणाविषयम् । अवैति=जानाति । हि=यस्मात् कारणात् । तव=शिवानुचरस्य । देवदारौ=वृक्षविशेषरक्षाविधौ । महान्=अत्यर्थं । प्रयत्नः=रक्षोपायः । हि=ध्रुवम् । रक्ष्यम्=पालनीयं वस्तु । विनाश्य=विनाशं नीत्वा । स्वयम्=आत्मना । अक्षतेन=अव्रणेन । नियोक्तुः=प्रभोः । अग्रे=पुरः । स्थातुम् =स्थितिं कर्तुम् । नहि शक्यम्=नो युज्यते ॥ ५६ ॥

किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः ॥ एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥ ५७ ॥

चेत्=यदि । किमपि=कथमपि । तव=कुम्भोदरस्य । अहम्=दिलीपः । अहिंस्यः=अवध्यः । मतः=इष्टः अस्मि । तर्हि । मे=मम । यशःशरीरे=कीर्त्तिदेहे । दयालुः=कारुणिकः । भव=एधि । यतः मद्विधानाम्=मादृशानाम् विवेकिनाम् । एकान्तविध्वंसिषु=अवश्यविनाशिषु । भौतिकेषु=पंचभूतनिर्मितेषु । पिण्डेषु=देहेषु । खल्वनास्था=स्थितिर्न खल्वनपेक्षैव ॥ ५७ ॥

संबन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ संगतयोर्वनान्ते ॥ तद्भूतनाथानुग ! नार्हसि त्वं संबन्धिनो मे प्रणयं विहन्तुम् ॥ ५८ ॥

सम्यक् बन्धो यस्मात् तं सम्बन्धम्=प्रेमानुबंधमिति यावत् । आभाषणम्=आलापः । पूर्वम्=प्रथमं कारणम् यस्य तम् । आहुः=वदन्ति ।

सः=सम्बन्धः । वनान्ते=अरण्यमध्ये । संगतयोः=मिलितयोः । नौ=आवयोः । वृत्तः=संजातः । तत्=तस्मात्कारणात् । भूतनाथानुग !=हेशिवानुचर ! । त्वम्=सिंहः । सम्बन्धिनः=मित्रस्य । मे=मम । प्रणयम्=याच्ञाम् । विहन्तुम्=त्यक्तुम् नाशयितुं वा । नार्हसि=नो योग्योऽसि ॥ ५८ ॥

तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ॥ स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥ ५९ ॥

तथेति=तथास्त्विति । गाम्=वाचम् । उक्तवते=कथितवते । हरये=मृगेन्द्राय । सद्यः=तत्क्षणे । प्रतिष्टम्भात्=प्रतिबन्धात् । विमुक्तौ=त्यक्तौ । बाहू=भुजौ यस्य सः=दिलीपः । न्यस्तशस्त्रः=त्यक्तायुधः सन् । आमिषस्य=मांसस्य । पिण्डमिव=कवलमिव । स्वदेहम्=निजशरीरम् । उपानयत्=समर्पितवान् ॥ ५९ ॥

तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ॥ अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥ ६० ॥

तस्मिन्क्षणे=तस्मिन् समये । उग्रम्=उत्कटम् । सिंहनिपातम्=हरिपतनम् । उत्पश्यतः=उदीक्षमाणस्य । अवाङ्मुखस्य=अधोमुखस्य । प्रजानाम्=लोकानाम् । पालयितुः=रक्षकस्य राज्ञो दिलीपस्य । उपरि=उपरिष्टात् । शिरसीति यावत् । विद्याधराणाम्=गन्धर्वाणाम् । हस्तमुक्ता=पाणिच्युता । पुष्पवृष्टिः=कुसुमवर्षणम् । पपात=ववर्षेत्यर्थः ॥ ६० ॥

उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् ॥ ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम् ॥ ६१ ॥

राजा=दिलीपः । हे वत्स !=हे पुत्र ! । उत्तिष्ठ=उद्गच्छ । इति=एवम् । अमृतायमानम्=पीयूषमिवाचरत् । उत्थितम्=उत्पन्नम् । वचः=प्रागुक्तं वचनम् ।

निशम्य=श्रुत्वा । उत्थितः सन्=उद्गतः सन् । अग्रतः= पुरः । स्वाम्=स्वकीयाम् । जननीमिव=मातरमिव । प्रस्रविणीम्=पयस्विनीम् । गाम्=धेनुम् । ददर्श=अवलोकयामास । सिंहम्=हरिं नो ददर्श ॥ ६१ ॥

तं विस्मितं धेनुरुवाच साधो ! मायां मयोद्भाव्य
परीक्षितोऽसि ॥ ऋषिप्रभावान्मयि नान्तकोऽपि
प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥ ६२ ॥

विस्मितम्=साश्चर्य्यम् । तम्=दिलीपम् । धेनुः=गौः नन्दिनी । उवाच=जगाद । हे साधो !=हे श्रेष्ठ ! । मया मायाम्=छलं । उद्भाव्य=विरच्य । परीक्षितोऽसि=विज्ञातोऽसि । ऋषिप्रभावात्=वसिष्ठप्रतापात् । मयि=ममोपरीत्यर्थः । अन्तकोऽपि=यमोऽपि । प्रहर्त्तुम्=प्रहारं कर्त्तुं मां हन्तुमित्यर्थः । न प्रभुः=नो समर्थः । अन्यहिंस्राः=इतरघातकाः । किमुत=न किमपीत्यर्थात् ॥ ६२ ॥

भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र !
वरं वृणीष्व ॥ न केवलानां पयसां प्रसूतिमवेहि
मां कामदुघां प्रसन्नाम् ॥ ६३ ॥

हे पुत्र !=हे वत्स ! । गुरौ=वसिष्ठे । भक्त्या=श्रद्धया । मयि=ममोपरि । अनुकम्पया च=करुणया च अहं । ते=तुभ्यम् । प्रीतास्मि=प्रसन्नास्मि । वरम्=अभिलषितम् । वृणीष्व=याचस्व । माम्=गाम् । केवलानाम्=एकेषाम् । पयसाम्=दुग्धानाम् । प्रसूतिम्=कारणम् । नावेहि=नो जानीहि । किन्तु प्रसन्नाम्=सानुकूलाम् । कामदुघाम्=वाञ्छितफलदात्रीम् । अवेहि=विद्धि ॥ ६३ ॥

ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जित-
वीरशब्दः ॥ वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां
तनयं ययाचे ॥ ६४ ॥

ततः=तदनन्तरम् । मानितार्थी=मानितः पूजितः स्वीकृतो वा अर्थोऽभिलाषा यस्य । स्वहस्तार्जितः=स्वपाणिलब्धः । वीरशब्दः=शूरशब्दः येन । सः=राजा दिलीपः । हस्तौ=करौ । समानीय=संयोज्य । वंशस्य=कुलस्य । कर्तारम्=प्रवर्तकम्[1] । अनन्तकीर्तिम्=अनल्पयशसम् । तनयम्=पुत्रम् । सुदक्षिणायाम्=स्वभार्यायाम् । ययाचे=अर्थयांचक्रे ॥ ६४ ॥

सन्तानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा ॥ दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥ ६५ ॥

सा=प्रागुक्ता । पयस्विनी=गौः । सन्तानकामाय=अपत्याभिलाषिणे । राज्ञे=दिलीपाय । तथेति=एवमस्त्विति । कामम्=वरम् । प्रतिश्रुत्य=प्रतिज्ञाय कथयित्वा वा । हे पुत्र !=हे वत्स ! । मदीयम्=मम । पयः=दुग्धम् । पत्रपुटे=पर्णनिर्मितपात्रे । दुग्ध्वा=निष्कास्य प्रपूर्य वा । उपभुङ्क्ष्व=पिब । तम्=राजानम् । इति=एवम् । आदिदेश=आज्ञापयामास ॥ ६५ ॥

वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः ! ॥ औधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ॥ ६६ ॥

हेमातः !=हेजननि ! । वत्सस्य=तवात्मजस्य । होमार्थविधेः=यज्ञानुष्ठानस्य च । शेषम्=अवशिष्टम् । तव=भवत्याः । ऊधसि भवम् औधस्यम्=दुग्धम् । ( शरीरावयवाच्चेति यत् ) रक्षितायाः=गोपितायाः सम्यक्पालितायाः इत्यर्थः । उर्व्याः=भूमेः । षष्ठांशमिव=षष्ठभागमिव । ऋषेः=वसिष्ठस्य । अनुज्ञाम्=आज्ञाम् । अधिगम्य=लब्ध्वा । उपभोक्तुम्=पातुम् । इच्छामि=वाञ्छामि ॥ ६६ ॥

---

१ अत एव ज्ञापकात् ' रघुवंशम् ' इति नामान्वर्थम् ।

इत्थं क्षितीशेन वसिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव ॥ तदन्विता हैमवताच्च कुक्षेः प्रत्याययावाश्रमश्रमेण ॥ ६७ ॥

इत्थम्=उक्तप्रकारेण । क्षितीशेन=नृपेण । विज्ञापिता=प्रार्थिता । वसिष्ठस्य=ऋषेः । धेनुः=गौः । प्रीततरा=सातिशयं प्रसन्ना । बभूव= संजाता । तदन्विता=दिलीपसहिता । हैमवतात्=हिमवत्सम्बन्धिनः । कुक्षेः=गुहायाः । अश्रमेण=अप्रयासेन । आश्रमम्=तपोवनम् । प्रत्याययौ= प्रत्याजगाम च ॥ ६७ ॥

तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे निवेद्य ॥ प्रहर्षचिह्नानुमितं प्रियायै शशंस वाचा पुनरुक्तमेव ॥ ६८ ॥

प्रसन्नेन्दुरिव=निर्मलचन्द्र इव मुखम्=आननम् । यस्य सः । नृपाणाम्= राज्ञाम् । गुरुः=शास्ता दिलीपः । प्रहर्षचिह्नैः=आह्लादलक्षणैः । अनुमितम्= ज्ञातम् तस्याः नान्दिन्याः । प्रसादम्=सुप्रसन्नतामानुकूल्यं वा । पुनरुक्त मेव=भूयः कथितमेव । वाचा=वाक्येन । गुरवे=वसिष्ठाय । निवेद्य= विज्ञाप्य । तदनु प्रियायै=सुदक्षिणायै । शशंस=कथयामास ॥ ६८ ॥

स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम् ॥ पपौ वसिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्तमिवातितृष्णः ॥ ६९ ॥

अनिन्दितात्मा=शुद्धान्तःकरणः । सत्सु=सज्जनेषु वत्सलः=कृपालुः । वसिष्ठेन=गुरुणा । कृताभ्यनुज्ञः=दत्ताज्ञः । सः=राजा । वत्सस्य=वत्सपीतस्य । हुतस्य=होमस्य । अवशिष्टम्=शेषम् । नान्दिन्याः=धेनोः । स्तन्यम्=दुग्धम् । शुभ्रम्=शुक्लवर्णं स्वच्छमित्यर्थः । मूर्त्तम्=साकारं । यश इव=कीर्त्तिमिव । अतितृष्णः=तृषार्त्तः सन् । पपौ=अपात् ॥ ६९ ॥

प्रातर्यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ॥ तौ दंपती स्वां प्रति राजधानीं प्रस्थापयामास वशी वसिष्ठः ॥ ७० ॥

वशी=जितेन्द्रियः । अतिशयेन वशीति वसिष्ठः । प्रातः=प्रभाते त्रयोविंशे दिने । यथोक्तस्य=प्रागुक्तस्य । व्रतस्य=गोसेवारूपनियमस्य । पारणा=व्रतान्तभोजनम् तस्यान्ते=समाप्तौ । प्रास्थानिकम्=यात्रासमयोचितम् । स्वस्त्ययनम्=स्वस्तिवाचनादि मांगलिककृत्यम् । प्रयुज्य=कृत्वा । तौ=उभौ । दम्पती=जायापती सुदक्षिणादिलीपावित्यर्थः । स्वाम्=निजां । राजधानींप्रति=राजावासं महानगरंप्रति । प्रस्थापयामास=प्रेषयाञ्चकार ॥ ७० ॥

प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्तुररुन्धतीं च ॥ धेनुं स वत्सां च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः ॥ ७१ ॥

नृपः=दिलीपः । हुतम्=तर्पितम् । हुताशनम्=वह्निं । भर्त्तुः=वसिष्ठस्य । अनन्तरम्=पश्चात् । अरुन्धतीञ्च=वसिष्ठपत्नीं च । सवत्साम्=सपुत्राम् । धेनुञ्च=गां नंदिनीञ्च । प्रदक्षिणिकृत्य=प्रगतो दाक्षिणं प्रदक्षिणम् । तिष्ठद्गुप्रभृतीनि च (२।१।१७) इत्यव्ययीभावः ततश्च्विः । अप्रदक्षिणं प्रदक्षिणं सम्पद्यमानं कृत्वा प्रदक्षिणीकृत्य परिक्रम्येत्यर्थः । सद्भिः=शोभनैः । मङ्गलैः=प्रदक्षिणादिभिः उदग्रतरः=उन्नततरः प्रभावः=प्रतापः यस्य सः । प्रतस्थे=जगाम ॥ ७१ ॥

श्रोत्राभिरामध्वनिना रथेन स धर्मपत्नीसहितः सहिष्णुः ॥ ययावनुद्घातसुखेन मार्गं स्वेनेव पूर्णेन मनोरथेन ॥ ७२ ॥

धर्मपत्न्या=निजमहिष्या सुदक्षिणया सहितः=युक्तः । सहिष्णुः= सहनशीलः । सः=दिलीपः । श्रोत्रयोः=कर्णयोः अभिरामः=आह्लादप्रदः ध्वनिः=श्रुतिर्यस्य तेन । अनुद्धातः=पाषाणादिप्रतिघातवर्जितः अतएव सुखयतीतिसुखस्तेन । रथेन=स्यन्दनेन । स्वेन=स्वकीयेन पूर्णेन=परिपूर्णेन । मनोरथेनेव=अभिलषितेनेव । मार्गम्=पन्थानम् । ययौ= वव्राज ॥ ७२ ॥

तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्शिताङ्गम् ॥ नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥ ७३ ॥

अदर्शनेन=प्रवासनिमित्तेनानवलोकनेन । आहितौत्सुक्यम्=जनितदर्शनोत्कण्ठम् । प्रजार्थेन=सन्तानार्थेन गोसेवारूपानियमेन कर्शितम्= कृशीभूतम् दुर्बलमित्यर्थः अङ्गम्=शरीरम् यस्य तम् । नवोदयम्= अभिनवाभ्युदयम् । औषधीनां नाथमिव=चन्द्रमसमिव । तम्=राजानम् । प्रजाः=लोकाः । तृप्तिम्=सन्तोषम् । अनाप्नुवद्भिः=अगृध्नुभिः । नेत्रैः=नयनैः । पपुः=अपुः ॥ ७३ ॥

पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः ॥ भुजे भुजंगेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ ७४ ॥

पुरन्दरश्रीः=इन्द्रसदृशतेजाः । सः=दिलीपः । पौरैः=नागरिकैः । अभिनन्द्यमानः=स्तूयमानः । उत्पताकम्=उन्नतध्वजम् । पुरम्=नगरम् । प्रविश्य=गत्वा । भुजङ्गेन्द्रेण=फणीन्द्रेण समानसारे=तुल्यबले । भुजे= बाहौ । भूमेः=पृथिव्याः । धुरम्=रक्षणादिभारम् । भूयः=पुनः । आससञ्ज=स्थापितवान् ॥ ७४ ॥

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः ।
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ॥

नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी ।
गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥ ७५ ॥

अथ=अनन्तरम् । द्यौः= आकाशम् । अत्रेः=तन्नामाख्यऋषेः । नयनयोः=लोचनयोः समुत्थम्=उत्पन्नम् । ज्योतिरिव प्रकाशं=चन्द्रमिव । सुरसरित्=गंगा । वह्निना=अग्निना निष्ठ्यूतम्=परित्यक्तम् । ऐशम्=शिवसम्बन्धि । तेजः=स्कन्दरूपमिव । राज्ञी=सुदक्षिणा । नरपतेः=दिलीपस्य कुलभूत्यै=वंशवृद्धयै । गुरुभिः=महद्भिः । लोकपालानाम्=इन्द्रादीनाम् अनुभावैः=तेजोभिः । अभिनिविष्टम्=संपन्नम् । गर्भम्=भ्रूणम् । आधत्त=दधौ ॥ ७५ ॥

इति श्रीव्रजरत्नभट्टाचार्यकृतौ रघुवंशविवृतौ
द्वितीयः सर्गः समाप्तः ।

---

## ॥ अथ तृतीयः सर्गः ॥

अथेप्सितं भर्तुरुपस्थितोदयं सखीजनोद्वीक्षणकौमुदीमुखम् । निदानमिक्ष्वाकुकुलस्य सन्ततेः सुदक्षिणा दौर्हृदलक्षणं दधौ ॥ १ ॥

अथ=गर्भधारणानन्तरम् । सुदक्षिणा=दिलीपपत्नी । भर्तुः=स्वामिनो दिलीपस्य । ईप्सितम्=अभिलषितम् । उपस्थितोदयम्=प्राप्ताभ्युदयम् । सखीजनानाम्=सहचारीणाम् उद्वीक्षणानाम्=दृष्टीनाम् कौमुदीमुखम्=चन्द्रिकाप्रादुर्भावम् । इक्ष्वाकुकुलस्य=इक्ष्वाकुवंशस्य । सन्ततेः

---

१ गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकम् । प्रकृतिः सविकारा च तत् सर्वं गर्भसंज्ञितम् ॥

अविच्छेदस्य । निदानम्=आदिकारणम् । निदानं त्वादिकारणमित्यमरः। दौर्हृदलक्षणम्=गर्भचिह्नम् । दधौ=आधत्त ॥ १ ॥

शरीरसादादसमग्रभूषणा मुखेन सालक्ष्यत लोध्रपाण्डुना ॥ तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥ २ ॥

शरीरस्य=देहस्य सादात्=कृशत्वात् । असमग्रभूषणा=अल्पाभरणा । सा=सुदक्षिणा । लोध्रेण=पुष्पेणेव पाण्डुना=श्वेतवर्णेन । मुखेन=आननेन । तनुप्रकाशेन=मन्दतेजसा । शशिना=विधुना । विचेयाः=मृग्याः तारकाः=नक्षत्राणि यस्या असौ । प्रभातकल्पा=ईषदूनप्रभाता । 'तसिलादिष्वाकृत्वसुचः'-इतिप्रभातशब्दस्य पुंवद्भावः । शर्वरी=रात्रिरिव । अलक्ष्यत=अदृश्यत ॥ २ ॥

तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ ॥ करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम् ॥ ३ ॥

क्षितीश्वरः=दिलीपः । तस्याः=सुदक्षिणायाः । आननम्=मुखम् । मृदा=मृत्तिकया सुरभि=सुरभिर्घ्राणतर्पणः इत्यमरः सुगन्धिमदित्यर्थः । रहसि=एकान्ते । उपाघ्राय=नासापुटाभ्यामास्वाद्य । शुचिव्यपाये=ग्रीष्मापगमे । पयोमुचाम्=मेघानाम् । पृषतैः=सीकरैः । सिक्तम्=उक्षितम् । वनराज्याः=अरण्यपङ्क्तेः पल्वलम्=अल्पसरोवरम् । करीव=हस्तीव । तृप्तिम्=सन्तोषम् ( अनिच्छां वा ) नाययौ=नो प्राप ॥ ३ ॥

दिवं मरुत्वानिव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुतः ॥ अतोऽभिलाषे प्रथमं तथाविधे मनो बबन्धान्यरसान्विलङ्घ्य सा ॥ ४ ॥

हि=यस्मात् कारणात् । दिगन्तविश्रान्तरथः=चक्रवर्ती । तत्सुतः= सुदक्षिणापुत्रः । मरुत्वान्=इन्द्रः । दिवम्=स्वर्गमिव । भुवम्=भूमिम् । भोक्ष्यते=अनुभविष्यति 'भुजोनवने इत्यात्मनेपदम् । अतः=अस्मात् कारणात् । प्रथमम्=पूर्वम् । सा=सुदक्षिणा । अन्यरसान्= तदितरयोग्यवस्तूनि । विलङ्घ्य=त्यक्त्वा । तथाविधे=भूविकारे मृद्रूपे । अभिलाषे=मनोरथे । मनः=चित्तम् । बबन्ध=विदधौ ॥ ४ ॥

न मे ह्रिया शंसति किंचिदीप्सितं स्पृहावती वस्तुषु केषु मागधी ॥ इति स्म पृच्छत्यनुवेल-मादृतः प्रियासखीरुत्तरकोसलेश्वरः ॥ ५ ॥

उत्तरकोसलेश्वरः=उत्तरकोसलाधिपतिर्दिलीपः । मगधस्य राज्ञोऽपत्यं कन्या मागधी=सुदक्षिणा । ह्रिया=लज्जया । किञ्चित्=किमपि । ईप्सि-तम्=अभिलषितं इष्टं वा । मे=मह्यम् । न शंसति=न कथयति । केषु वस्तु-षु=केषु पदार्थेषु । स्पृहावती=सकामा । इति=अनेन प्रकारेण । अनुवेलम्= प्रतिक्षणम् । आदृतः=आदृतवान् । ( कर्त्तरि क्तः ) ( आदृतौ सादरा-र्चितौ इत्यमरः ) प्रियायाः=सुदक्षिणायाः । सखीः=सहचरीः । पृच्छति स्म=पप्रच्छ ॥ ५ ॥

उपेत्य सा दोहददुःखशीलतां यदेव वव्रे तदप-श्यदाहृतम् ॥ न हीष्टमस्य त्रिदिवेऽपि भूपतेर-भूदनासाद्यमधिज्यधन्वनः ॥ ६ ॥

सा=सुदक्षिणा । दोहदस्य=गर्भस्य । दुःखशीलताम्=कष्टस्वभाव-ताम् । उपेत्य=प्राप्य । यदेव=यद्वस्तु । वव्रे=आचकाङ्क्ष । तद्वस्तु भर्त्रा आहृतम्=आनीतम् । अपश्यत्=अवलोकयामास । हि=यस्मात्कारणात् । अधिज्यधन्वनः=आरोपितकोदण्डस्य । अस्य भूपतेः=एतस्य क्षितीशस्य । इष्टम्=अभिलषितं वस्तु । त्रिदिवेऽपि=स्वर्गेऽपि । अनासाद्यम्=अप्राप्यम् । नाभूत्=नासीत् ॥ ६ ॥

क्रमेण निस्तीर्य च दोहदव्यथां प्रचीयमानावयवा रराज सा ॥ पुराणपत्रापगमादनन्तरं लतेव संनद्धमनोज्ञपल्लवा ॥ ७ ॥

सा=सुदक्षिणा । क्रमेण=क्रमशः । दोहदव्यथाम्=गर्भपीडाम् । निस्तीर्य=अतीत्य । प्रचीयमानावयवा=पुष्यमाणाङ्गा । पुराणपत्राणाम् । प्राचीनदलानाम् अपगमात्=नाशात् । अनन्तरम्=पश्चात् । सन्नद्धाः=संजाताः । मनोज्ञपल्लवाः=नव्यपत्राणि यस्या असौ । लतेव=वल्लीव । रराज=शुशुभे ॥ ७ ॥

दिनेषु गच्छत्सु नितान्तपीवरं तदीयमानीलमुखं स्तनद्वयम् ॥ तिरश्चकार भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियम् ॥ ८ ॥

दिनेषु=गर्भदिवसेषु । गच्छत्सु=व्रजत्सु सत्सु । नितान्तपीवरम्=अतीवपुष्टम् । आसमन्तान्नीले=श्यामवर्णे । मुखे=चूचुके यस्य तत् । तदीयम्=सुदक्षिणासम्बन्धि । स्तनद्वयम्=कुचयुग्मम् । भ्रमरैः=द्विरेफैः । अभिलीनयोः=व्याप्तयोः । सुजातयोः=शोभनयोः । पङ्कजकोशयोः=कमलकोरकयोः । श्रियम्=शोभाम् । तिरश्चकार=अनादरमकरोत् ॥ ८ ॥

निधानगर्भामिव सागराम्बरां शमीमिवाभ्यन्तरलीनपावकाम् ॥ नदीमिवान्तःसलिलां सरस्वतीं नृपः ससत्त्वां महिषीममन्यत ॥ ९ ॥

नृपः=दिलीपः । निधानम्=निधिः । गर्भे=अन्तर्यस्यास्तां । सागराम्बराम्=समुद्रान्तामित्यर्थः । भूमिमिव । अभ्यन्तरे=मध्ये । लीनः=व्याप्तः । पावकः=अग्निर्यस्यास्ताम् । शमीमिव=वृक्षविशेषमिव । अन्तःसलिलाम्=मध्यप्रविष्टजलाम् । सरस्वतीम्=तन्नामिकाम् नदीमिव=पयस्विनीमिव । ससत्त्वाम्=सजीवगर्भाम् । महिषीम्=राज्ञीम् । अमन्यत=मेने ॥ ९ ॥

प्रियानुरागस्य मनः समुन्नतेर्भुजार्जितानां च दिग-
न्तसम्पदाम् ॥ यथाक्रमं पुंसवनादिकाः क्रिया
धृतेश्च धीरः सदृशीर्व्यधत्त सः ॥ १० ॥

धीरः=धैर्यवान्। सः=राजा। प्रियाया वल्लभाया सुदक्षिणाया इत्यर्थः। अनुरागस्य स्नेहस्य। मनःसमुन्नतेः=चित्तौदार्यस्य। भुजेन=बाहुबलेन। अर्जितानाम्=लब्धानाम्। दिगन्तेषु=दिशावसानेषु। संपदाम्=श्रियाम्। धृतेश्च=सन्तोषस्य च। सदृशीः=तुल्याः। पुंसवनादिकाः=पुंसवनप्रभृतीः। क्रियाः=संस्कारान्। यथाक्रमम्=क्रमशः। व्यधत्त=अकरोत् ॥ १० ॥

सुरेन्द्रमात्राश्रितगर्भगौरवात्प्रयत्नमुक्तासनया गृहा-
गतः ॥ तयोपचाराञ्जलिखिन्नहस्तया ननन्द पारि-
प्लवनेत्रया नृपः ॥ ११ ॥

गृहागतः=निलयसमायातः। नृपः=दिलीपः। सुरेन्द्राणाम्=इन्द्रादिलोकपालानाम्। मात्राभिः=अंशैः। आश्रितस्य=युक्तस्य। गर्भस्य=दोहदस्य। गौरवात्=गुरुत्वात्। प्रयत्नेन=प्रयासेन। मुक्तम्=त्यक्तम् आसनम्=पीठम् यया तया। उपचारस्य=सत्कारस्य। अञ्जलौ=अञ्जलिकरणे। खिन्नहस्तया=व्यापृतकरया। पारिप्लवनेत्रया=चंचलाक्ष्या। ( चञ्चलं तरलं चैव पारिप्लवपरिप्लवे इत्यमरः ) तया=पत्न्या। ननन्द=जहर्ष ॥ ११ ॥

कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथगर्भभर्म-
णि ॥ पतिः प्रतीतः प्रसवोन्मुखीं प्रियां ददर्श
काले दिवमभ्रितामिव ॥ १२ ॥

अथ=इत्यनन्तरम्। कुमारभृत्यायाम्=बालचिकित्सायाम्। कुशलैः=निपुणैः। आप्तैः=विश्वस्तैः। भिषग्भिः=वैद्यैः। गर्भभर्मणि=गर्भपोषणकर्मणि। अनुष्ठिते=कृते सति। काले समये=दशमे मासीत्यर्थः। प्रतीतः प्रहृष्टस्सन् पतिः भर्ता दिलीपः। प्रसवोन्मुखीम्=आसन्नप्रसवाम्। प्रियाम्=भार्याम्। अभ्रिताम्=सघनाम्। दिवम्=द्यामिव। ददर्श=अदर्शत् ॥ १२ ॥

ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसंपदम् ॥ असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥ १३ ॥

ततः=तदनन्तरम् । शच्याः=इन्द्राण्याः समा=सदृशा सुदक्षिणेत्यर्थः । समये काले=दशमे मासे इत्यर्थः । उच्चसंश्रयैः=उच्चस्थानगतैः । असूर्यगैः सूर्यसंयोगरहितैः । अनस्तैरिति भावः । पञ्चभिः=पञ्चसङ्ख्याकैः । ग्रहैः=खचरैः । सूचिता=प्रदर्शिता । भाग्यसम्पत्=दैवसम्पत्तिर्यस्य तम् । पुत्रम्=सुतम् । त्रीणि साधनानि=उत्पादकानि यस्यास्तादृशी । शक्तिः=उत्साहः । अक्षयम्=नाशरहितम् । अर्थमिव=ऐश्वर्यमिव । असूत=जनयामास ॥ १३ ॥

दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे ॥ बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम् ॥ १४ ॥

दिशः=काष्ठाः । प्रसेदुः=निर्मला बभूवुः । मरुतः=वायवः । सुखाः=अनुकूलाः । ववुः=वान्ति स्म । अग्निः=दहनः । प्रदक्षिणार्चिः=अनुकूलज्वालस्सन् । हविः=हव्यम् । आददे=जग्राह । तत्क्षणम्=तस्मिन् समये । ( 'कालाध्वनोरत्यन्तसंयोगे'–इति द्वितीया ) । सर्वम्=अखिलम् । शुभशंसि=कल्याणसूचकम् । बभूव=अभूत् । हि=यतः । तादृशाम्=रघुसदृशानाम् । भवः=उत्पत्तिः । लोकाभ्युदयाय=संसाराभिवृद्धचै जगद्धिताय वा भवति ॥ १४ ॥

अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा ॥ निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव ॥ १५ ॥

अरिष्टे=सूतिकागृहे । ( अरिष्टं सूतिकागृहमित्यमरः ) । शय्याम्=तल्पम् । परितः=अभितः । ( 'अभितःपरितःसमयानिकषाहाप्रति

योगेषु दृश्यते '—इति द्वितीया ) विसारिणा=व्यापकेन । सुजन्मनः=शोभनोत्पत्तेः । तस्य=बालकस्य । निजेन=स्वकीयेन । तेजसा=प्रकाशेन । निशीथदीपाः=रात्रिप्रदीपाः आलोका वा । सहसा=द्रागेव । हतत्विषः=मन्दप्रकाशाः । आलेख्यसमर्पिताः=चित्रगता इव । बभूवुः=अभवन् ॥ १५ ॥

जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम् ॥ अदेयमासीत्त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ॥ १६ ॥

भूपतेः=दिलीपस्य । अमृतसंमिताक्षरम्=सुधातुल्यवर्णम् । कुमारजन्म=तनयप्रसूतिम् । शंसते=वदते । शुद्धान्तचराय=अन्तःपुरचारिणे । जनाय=सेवकपुरुषाय । शशिप्रभम्=उज्ज्वलम् । छत्रम्=आतपत्रम् । उभे=द्वे चामरे च=वालव्यजने च । त्रयमेव=एतत् त्रयात्मकमेव । अदेयम्=दानवर्जितं । आसीत्=अभूत् " पुत्रः संजातः " इत्यमृतायमानं वच उक्तवते सेवकाय छत्रचामरात्मकं राजचिह्नं विहाय किमप्यदेयं नाभूदितिभावः ॥ १६ ॥

निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम् ॥ महोदधेः पूर इवेन्दुदर्शनाद्गुरुः प्रहर्षः प्रबभूव नात्मनि ॥ १७ ॥

निवाते=पवनरहितस्थाने । यत् पद्मम्=कमलम् । तद्वत् । स्तिमितेन=निश्चलेन । चक्षुषा=नेत्रेण । कान्तम्=मनोहारि । सुताननम्=पुत्रमुखम् । पिबतः=सतृष्णं पश्यतः । नृपस्य राज्ञो दिलीपस्य । गुरुः=महान् । प्रहर्षः=आनन्दविशेषः । इन्दुदर्शनात्=चन्द्रावलोकनात् । महोदधेः=समुद्रस्य । पूर इव=जलौघ इव । आत्मनि=हृदये । न प्रबभूव=स्थातुं न शशाक ॥ १७ ॥

स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते ॥ दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ ॥ १८ ॥

स दिलीपसूनुः=असौ दिलीपपुत्रः । तपस्विना=तापसेन । पुराधसा=पुरोहितेन वसिष्ठेन । तपोवनात्=तापसस्थानात् । एत्य=आगत्य । अखिले=सम्पूर्णे । जातकर्मणि=जातस्य तनयस्य क्रियमाणविधिविशेषे जातसंस्कारे वा । कृते=विहिते सति । प्रयुक्तः=विहितः । संस्कारः=तीक्ष्णीकरणादिर्यस्य सः । आकरोद्भवः=खनिप्रभवः । मणिरिव रत्नमिव =वैदूर्यादि मणिविशेष इव । अधिकम्=अत्यन्तम् । बभौ=शुशुभे ॥१८॥

सुखश्रवा मङ्गलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् ॥ न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि ॥ १९ ॥

सुखः=अनुकूलः हर्षजनक इत्यर्थः । श्रवः=श्रवणं येषां ते । मङ्गलतूर्यनिस्वनाः=मङ्गलवाद्यध्वनयः । वारयोषिताम्=वेश्यानाम् । ( वारस्त्री गणिका वेश्या रूपाजीवा इत्यमरः ) । प्रमोदनृत्यैः=हर्षनर्त्तनैस्सह । मागधीपतेः=सुदक्षिणास्वामिनो दिलीपस्य । सद्मनि=गृहे । केवलम्=एकम् । न व्यजृम्भन्त=नो नेदुः । किन्तु दिवौकसाम्=देवानामपि पथि=आकाशेऽपि व्यजृम्भन्त ॥ १९ ॥

न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ॥ ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥ २० ॥

रक्षितुः=गोप्तुः सम्यक् पालनशीलस्य वा । तस्य=दिलीपस्य । संयतः=बद्धः कारागृहनिबद्ध इति वा । न बभूव=नो अभूत् । यम्=बद्धम् । सुतजन्मना=पुत्राविर्भावेन । हर्षितः=सानन्दः सन् । विसर्जयेत्=विमोचयेत् । किन्तु स राजा । तदा=पुत्रजन्मसमये । पितॄणाम्=पूर्वपुरुषाणाम् । ऋणाभिधानात्=ऋणनाम्नः बन्धनात् । संयमनात् केवलम्=एकाकी यथा तथा । स्वयम्=आत्मना । मुमुचे=मुक्तवान् ॥ २० ॥

श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पर्थिवः ॥ अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् ॥ २१ ॥

अर्थविद्=शब्दार्थज्ञः । पार्थिवः=दिलीपः । अयम्=एषः । अर्भकः=शिशुः । श्रुतस्य=शास्त्रस्य ।अन्तम्=पारम् । यायात्=गच्छेत् । 'शकिलिङ् च' इति शक्यर्थे लिङ् । तथा=तेन प्रकारेण । युधि=संग्रामे । परेषाम्=शत्रूणाम् । अन्तम्=पारं च । यायात्=यातुं शक्नुयात् । इति=हेतोः । धातोः=गत्यर्थस्य । लघिधातोर्गमनार्थम्=गमनरूपमर्थम् । अवेक्ष्य=आलोच्य । आत्मसम्भवम्=स्वकीयतनयम् । नाम्ना रघुम्=रघुनामानम् । चकार=अकरोत् ॥ २१ ॥

पितुः प्रयत्नात्स समग्रसंपदः शुभैः शरीरावयवैर्दिने दिने ॥ पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥ २२ ॥

सः=रघुः । समग्रसम्पदः=पूर्णसंपत्तेः । पितुः=जनकस्य दिलीपस्य । प्रयत्नात्=उपायात् । शुभैः=मनोहरैः । शरीरावयवैः=करचरणादिदेहांगैः । हरिदश्वदीधितेः=सूर्यकिरणस्य । अनुप्रवेशात्=अन्तर्गमनात् । बालचन्द्रमाः=प्रतिपच्छशीव । दिने दिने=प्रतिदिवसम् । ( नित्यवीप्सयोः इति द्वित्वम् ) वृद्धिम्=शरीरोपचयम् । पुपोष=पुष्टवान् ॥ २२ ॥

उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ ॥ तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥ २३ ॥

उमावृषाङ्कौ=पार्वतीपरमेश्वरौ । शरजन्मना=कार्त्तिकेयेन । यथा=येन प्रकारेण । ननन्दतुः=जहृषतुः । शचीपुरन्दरौ=इन्द्राणीमघवानौ । जयन्तेन=जयन्तनाम्ना । यथा=येन प्रकारेण । ननन्दतुः=तथा=तेन प्र-

कारेण । तत्समौ=ताभ्याम् उमावृषाङ्काभ्यां शचीपुरन्दराभ्याम् । समौ= तुल्यौ । सा मागधी=सुदक्षिणा । नृपश्च=दिलीपश्च । तत्सदृशेन=ताभ्यां कुमारजयन्ताभ्यां तुल्येन । सुतेन=पुत्रेण । ननन्दतुः=आनन्दं प्रापतुः ॥ २३ ॥

रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत्प्रेम परस्पराश्रयम् ॥ विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि पर्यचीयत ॥ २४ ॥

रथाङ्गनाम्नोरिव=चक्रवाकयोरिव । 'पुमान्स्त्रिया इत्येकशेषः' । तयोः= दम्पत्योः । भावबन्धनम्=हृदयग्राहि । परस्पराश्रयम्=अन्योन्यविषयम् । यत्प्रेम=यः स्नेहः । बभूव=अभवत् । तत्प्रेम । एकेन=केवलेन । सुतेन= तनयेन । विभक्तमपि=विहितविभागमपि । परस्परस्य=अन्योन्यस्य । उपरि=विषये । पर्यचीयत=ववृधे ॥ २४ ॥

उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम् ॥ अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥ २५ ॥

सोऽर्भकः=असौ शिशुः । ( पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ' इत्यमरः ) धात्र्या=उपमात्रा । प्रथमम्=पूर्वम् । उदितम्= उपदिष्टम् उच्चरितं वा । वचः=वाक्यम् । उवाच=बभाषे । तदीयाम्= धात्रीसम्बन्धिनीम् । अङ्गुलीम्=हस्तावयवम् । अवलम्ब्य=गृहीत्वा । ययौ=जगाम । प्रणिपातस्य=नत्याः । शिक्षया=उपदेशेन । नम्रः=विनयान्वितः । अभूच्च=आसीच्च । तेन=इत्युक्तप्रकारेण । पितुः जनकस्य । मुदम्=हर्षम् । ततान=वर्धयामास ॥ २५ ॥

तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि ॥ उपान्तसंमीलितलोचनो नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ ॥ २६ ॥

शरीरयोगजैः=देहसंपर्कोत्पन्नैः । सुखैः=हर्षैः । त्वचि=त्वगिन्द्रिये शरीरचर्मणीत्यर्थः । अमृतम्=सुधाम् । निषिञ्चन्तम्=वर्षन्तमिव । तम्=रघुम् । अङ्कम्=उत्सङ्गम् । आरोप्य=संस्थाप्य । उपान्तयोः=नेत्रप्रान्तयोः । सम्मीलितलोचनः=हर्षातिशयात् सम्मिषितनेत्रान्तः सन् । नृपः=दिलीपः । चिरात्=चिरस्य दीर्घकालाद्वा । सुतस्पर्शरसज्ञताम्=पुत्रालिङ्गनस्वादुताम् । ययौ=प्राप ॥ २६ ॥

अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम् ॥ स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पतिः प्रजानामिव सर्गमात्मनः ॥ २७ ॥

स्थितेः=मर्यादायाः । अभेत्ता=पालकः । परार्ध्यजन्मना=उत्कृष्टजन्मा । अनेन=रघुणा । अन्वयम्=वंशम् । प्रजानाम्=लोकानाम् । पतिः=ब्रह्मा । गुणेषु=सत्त्वादिषु । अग्रेण=मुख्येन श्रेष्ठेन वा । स्वस्य=आत्मनः । मूर्तिभेदेन=अवतारविशेषेण विष्णुना । आत्मनः=स्वस्य । सर्गम्=सृष्टिमिव । स्थितिमन्तम्=प्रतिष्ठावन्तम् । अमंस्त=मेने ॥ २७ ॥

सवृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः ॥ लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥ २८ ॥

चलकाकपक्षकैः=चञ्चलशिखण्डकैः । सवयोभिः=समानवयस्कैः । अमात्यपुत्रैः=मंत्रिसुतैः । अन्वितः=युक्तः । वृत्तचूलः संजातचूडाकर्मा सः=रघुः । लिपेः=अक्षरविन्यासस्य । यथावद्ग्रहणेन=सम्यग्ग्रहणेन बोधेन वा । वाङ्मयम्=शब्दमात्रम् । नदीमुखेन=सरिद्द्वारेण । समुद्रम्=सागरमिव । आविशत्=प्रविवेश ॥ २८ ॥

अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ॥ अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥ २९ ॥

अथ=इत्यनन्तरम् । विधिवत्=यथाशास्त्रं यथाविधि वा । उपनीतम्=कृतोपनयनसंस्कारं जातवेदारम्भवृत्तं वा । गुरुप्रियम्=शिक्षकप्रीतिपात्रम् । एनम्=रघुम् । विपश्चितः=विद्वांसः । गुरवः=उपदेष्टारः । विनिन्युः=शिक्षितवन्तः । ते=गुरवः । अत्र=अस्मिन् रघौ । अवन्ध्ययत्नाः=सफलप्रयासाश्च । बभूवुः=अभूवन् । हि=यस्मात् कारणात् । वस्तुनि=सत्पात्रे । उपहिता=प्रयुक्ता । क्रिया=शिक्षा । प्रसीदति=सफलीभवति ॥ २९ ॥

धियः समग्रैः स गुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः ॥ ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ॥ ३० ॥

उदारधीः=विमलमतिः । सः=रघुः । धियः=बुद्धेः । समग्रैः=सकलैः । गुणैः=शुश्रूषादिभिः । चत्वारः सागराः उपमा=सादृश्यं यासान्तथोक्ताः । चतस्रः=चतुःसङ्ख्याकाः । विद्याः=आन्वीक्षिक्यादीः । हरिताम्=दिशाम् । ईश्वरः=स्वामी सूर्यः । पवनवत्=वायुवत् । अतिपातिभिः=शीघ्रगामिभिः । हरिद्भिः=स्वकीयाश्वैः । दिश इव=हरित इव । क्रमात्=अनुक्रमम् । ततार=पारं जगाम ॥ ३० ॥

त्वचं स मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवत् ॥ न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः ॥ ३१ ॥

सः=रघुः । मेध्याम्=पवित्राम् । रौरवीम्=रुरुमृगसम्बन्धिनीम् । त्वचम्=चर्म । परिधाय=आच्छाद्य । मन्त्रवत्=समन्त्रकम् । अस्त्रम्=आग्नेयादिकमस्त्रविद्यामित्यर्थः । पितुः=जनकादेव । 'आख्यातोपयोगे' -इत्यपादानत्वम् । अपादाने पञ्चमी । अशिक्षत=अभ्यस्तवान् । तद्गुरुः=तत्पिता । एकः=अद्वितीयः । केवलं पार्थिवः=नृपमात्रः । ना-

---

१ आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः ॥

भूत्=न बभूव । किन्तु क्षितौ=भुवि जगतीत्यर्थः । सः=दिलीपः । एकः=अद्वितीयः । धनुर्धरोऽपि=कोदण्डधार्यपि । अभूत्=आसीत् ॥ ३१ ॥

**महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभावं कलभः श्रयन्निव ॥ रघुः क्रमाद्यौवनभिन्नशैशवः पुपोष गाम्भीर्यमनोहरं वपुः ॥ ३२ ॥**

रघुः=स दिलीपतनयः । क्रमात्=क्रमशः । यौवनेन=तारुण्येन । भिन्नशैशवः=विगतबालभावः सन् । महोक्षताम्=महावृषभताम् । स्पृशन्=गृह्णन् गच्छन् वा । वत्सतरः=अप्राप्तदमनकालः क्षुद्रवत्स इव । द्विपेन्द्रभावम्=महागजेन्द्रत्वम् । श्रयन्=स्वीकुर्वन् । कलभः=हस्तिशावक इव । गाम्भीर्येण=अचापलेन । मनोहरम्=मनोज्ञम् । वपुः=शरीरम् । पुपोष=पुष्टं चकार ॥ ३२ ॥

**अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयद्गुरुः ॥ नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवाबभुः ॥ ३३ ॥**

अथ=अनन्तरम् । गुरुः=पिता । अस्य=शिशोः । गोदानविधेः=केशान्तसंस्कारस्य । अनन्तरम्=पश्चात् । विवाहदीक्षाम्=परिणयक्रियाम् दारपरिग्रहविधिं वा । निरवर्त्तयत्=सम्पन्नं चकार । नरेन्द्रकन्याः=राजेन्द्रसुताः । तम्=रघुम् । दक्षसुताः=रोहिण्यादिनक्षत्राणि । तमोनुदम्=चन्द्रमसमिव । सत्पतिम्=सद्भर्तारम् । अवाप्य=लब्ध्वा । आबभुः=शुशुभिरे ॥ ३३ ॥

**युवा युगव्यायतबाहुरंसलः कपाटवक्षाः परिणद्धकन्धरः ॥ वपुःप्रकर्षादजयद्गुरुं रघुस्तथापि नीचैर्विनयाददृश्यत ॥ ३४ ॥**

युवा=तरुणः । युगवत् रथांगवत् व्यायतौ=दीर्घौ विस्तृतौ वा । बाहू=भुजौ यस्य सः । अंसलः=बलवान् । ( बलवान् मांसलोऽसल इत्यमरः )

कपाटवक्षाः=महोरस्कः । परिणद्धकन्धरः=पुष्टग्रीवः । रघुः=दिलीपसूनुः । वपुषः=देहस्य । प्रकर्षात्=आधिक्यात् स्थौल्यात् । गुरुम्=पितरम् । अजयत्=अतिक्रान्तवान् । तथापि विनयात्=नम्रतया । नीचैः=अल्पकः । अदृश्यत=दृश्यते स्म ॥ ३४ ॥

ततः प्रजानां चिरमात्मना धृतां नितान्तगुर्वीं
लघयिष्यता धुरम् ॥ निसर्गसंस्कारविनीत इत्यसौ
नृपेण चक्रे युवराजशब्दभाक् ॥ ३५ ॥

ततः=तदनन्तरम् । आत्मना=स्वेन । चिरम्=चिरात् दीर्घकालाद्वा । धृतां=गृहीतां । नितान्तगुर्वीम्=अतिभारवतीम् । 'वोतो गुणवचनादिति ङीष्'। प्रजानाम्=लोकानाम् । धुरम्=पालनरूपभारम् । लघयिष्यता=लघुं करिष्यता । ( तत् करोति तदाचष्टे ) इति लघुशब्दण्णिच् । 'लृटः सद्वेति' शतृप्रत्ययः । नृपेण=दिलीपेन । असौ=रघुः । निसर्गेण=स्वभावेन । संस्कारेण=शास्त्राभ्यासजनितवासनया च । विनीतः=नम्रः । इति=हेतोः । युवराज इति शब्दं भजति युवराजशब्दभाक् । 'भजोण्विः'=इति ण्विप्रत्ययः । चक्रे=विहितः ॥ ३५ ॥

नरेन्द्रमूलायतनादनन्तरं तदास्पदं श्रीर्युवराजसंज्ञितम् ॥ अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवोत्पलम् ॥ ३६ ॥

गुणान्=दयादाक्षिण्यादीन् । सौरभ्यादींश्चाभिलषति=कामयते इति गुणाभिलाषिणी । श्रीः=राजलक्ष्मीः पद्मशोभा च । नरेन्द्रः=दिलीप एव । मूलायतनम्=मुख्यस्थानम् । तस्मात् अनन्तरम्=पश्चात् स्थितं । युवराजसंज्ञितम्=युवराजसंज्ञावन्तम् ' तदस्य सञ्जातन्तारकादिभ्य इतजितीतच्-प्रत्ययः । तदास्पदम्=रघुस्थानम् । ' आस्पदं प्रतिष्ठायाम्' इति निपातः । कमलात्=चिरोत्पन्नात् पूर्वाश्रितकमलात् । नवावतारम्=अभिनवोत्पन्नम् । उत्पलम्=कमलमिव । अंशेन=अवयवेन । अगच्छत्=इयाय ॥ ३६ ॥

विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ॥ बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥ ३७ ॥

सारथिना=रथादिवाहनप्रेरकेण सहायभूतेनेत्यर्थः । वायुना=पवनेन । विभावसुः=अग्निरिव " । घनव्यपायेन=शरत्समयेन । गभस्तिमान्=सविता इव । कटप्रभेदेन=मदोदयेन । करीव=गज इव । पार्थिवः=दिलीपः । तेन=रघुणा । अतितराम्=अत्यन्तम् । सुदुःसहः=सोढुमनर्हः । बभूव=अभूत् ॥ ३७ ॥

नियुज्य तं होमतुरङ्गरक्षणे धनुर्धरं राजसुतैरनुद्रुतम् ॥ अपूर्णमेकेन शतक्रतूपमः शतं क्रतूनामपविघ्नमाप सः ॥ ३८ ॥

शतक्रतूपमः=इन्द्रसमः । सः=दिलीपः । राजसुतैः=नृपतनयैः । अनुद्रुतम्=अनुगतम् सहितमित्यर्थः । धनुर्धरम्=कोदंडधारिणम् । तम्=रघुम् । होमतुरङ्गस्य=यज्ञीयाश्वस्य । रक्षणे=गोपायकर्माणि । नियुज्य=अधिष्ठाप्य । एकेन=क्रतुना । अपूर्णम्=हीनम् । क्रतूनाम्=यज्ञानाम् अश्वमेधानामित्यर्थः । शतम्=शतसङ्ख्याकम् । अपविघ्नम्=अश्वचौर्यरूपान्तरायम् यद्वा निरन्तरायम् । आप=लेभे ॥ ३८ ॥

ततः परं तेन मखाय यज्वना तुरङ्गमुत्सृष्टमनर्गलं पुनः ॥ धनुर्भृतामग्रत एव रक्षिणां जहार शक्रः किल गूढविग्रहः ॥ ३९ ॥

ततः परम्=तदनन्तरम् । यज्वना=विधिनेष्टवता । तेन=दिलीपेन । पुनः=भूयोऽपि । मखाय=यज्ञाय । 'क्रियार्थोपपदस्य'—इत्यादिना चतुर्थी । क्रतुं कर्तुमित्यर्थः उत्सृष्टम्=मुक्तम् । अनर्गलम्=बन्धनरहितम् । तुरङ्गम्=अश्वम् । धनुर्भृताम्=आयुधवतामित्यर्थः । रक्षिणाम्=रक्षकाणाम् । अग्रत एव=पुरस्तादेव । शक्रः=इन्द्रः । गूढविग्रहः=गुप्तदेहः सन् । जहार किल=चोरयामास खलु ॥ ३९ ॥

विषादलुप्तप्रतिपत्ति विस्मितं कुमारसैन्यं सपदि स्थितं च तत् ॥ वसिष्ठधेनुश्च यदृच्छयागता श्रुतप्रभावा ददृशेऽथ नंदिनी ॥ ४० ॥

विषादेन=पश्चात्तापरूपेण=मनसो विकारेण। लुप्ता=नष्टा। प्रतिपत्तिः=कर्त्तव्यविचारो यस्य । तथोक्तम् कुमारस्य=राजपुत्रस्य रघोः बलं=सैन्यं। तत् विस्मितं=साश्चर्यं यथा स्यात्तथा आकस्मिकाश्वनाशाच्चौरानवलोकनाच्चेति भावः क्रियाविशेषणमेतत् । स्थितम्=तस्थौ । अथ=अनन्तरम् । श्रुतप्रभावा=प्रसिद्धप्रतापा । यदृच्छया=स्वेच्छया । आगता=प्राप्ता । नन्दिनी=वसिष्ठधेनुः वसिष्ठगौः । सपदि तत्कालमेव। ददृशे=दृष्टा सैन्येनेति शेषः ॥ ४० ॥

तदङ्गनिस्यन्दजलेन लोचने प्रमृज्य पुण्येन पुरस्कृतः सताम् ॥ अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः ॥ ४१ ॥

सताम्=सज्जनानाम् भद्रव्यक्तीनामितिभावः । पुरस्कृतः=अग्रे कृतः मतो वा । दिलीपस्य नन्दनः=सूनुः रघुः । पुण्येन=मेध्येन । तस्याः=नन्दिन्याः । अङ्गम्=यच्छरीरम्। तस्य निस्यन्दः=द्रवः । स एव जलम् तेन=प्रस्वेदेन । लोचने=चक्षुषी । प्रमृज्य=शोधयित्वा । अतीन्द्रियेषु=इन्द्रियाऽगम्येषु चक्षुर्विषयातिक्रान्तेष्विति भावः । भावेष्वपि=वस्तुष्वपि । उपपन्नदर्शनः=प्राप्तावलोकनशक्तिः । वभूव=संजातः ॥ ४१ ॥

स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसंभवः ॥ पुनः पुनः सूतनिषिद्धचापलं हरन्तमश्वं रथरश्मिसंयतम् ॥ ४२ ॥

नरदेवसम्भवः=मनुष्येश्वरांगजः । सः=रघुः । पुनः पुनः=मुहुर्मुहुः । सूतेन=सारथिना । निषिद्धचापलम्=निवारितचाञ्चल्यम् । रथस्य=स्यन्दनस्य । रश्मिभिः=प्रग्रहैः । संयतम्=बद्धम् । अश्वम्=

हयम् । हरन्तम्=चोरयन्तम् । पर्वतपक्षाणाम्=गिरिपतत्राणाम् । शातनम्=छेदकम् । देवम्=इन्द्रम् । पूर्वतः=पूर्वस्यां दिशि । ददर्श=अवलोकयामास ॥ ४२ ॥

शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः ॥ अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्तयन्निव ॥ ४३ ॥

रघुः=दिलीपात्मजः । तम्=अश्वचोरकं । अनिमेषवृत्तिभिः=निमेषव्यापाररहितैः । अक्ष्णाम्=नेत्राणाम् । शतैः=शतसंख्याकैः । हरिद्भिः=कपिलवर्णैः । वाजिभिः=हयैश्च । हरिम्=इन्द्रम् । विदित्वा=परिज्ञाय । एनम्=इन्द्रम् । गगनस्पृशा=आकाशगामिना तारेणेत्यर्थः । धीरेण=गम्भीरेण । स्वरेण=ध्वनिना । निवर्त्तयन्निव=परावर्त्तयन्निव । अवोचद्=अभाणत ॥ ४३ ॥

मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र ! सदा निगद्यसे ॥ अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्त्तसे ॥ ४४ ॥

हे देवेन्द्र !=हे सुरराज ! । मनीषिभिः=विद्वद्भिः । त्वमेव=भवानेव । मखांशभाजाम्=यज्ञभागभुजाम् । प्रथमः=पूर्वः । सदा=सर्वदा । निगद्यसे=कथ्यसे । तथापि । अजस्रदीक्षायाम्=नित्यं यज्ञानुष्ठाने । प्रयतस्य=संलग्नस्य । मद्गुरोः=मत्पितुः । क्रियाविघाताय=यज्ञानुष्ठानविनाशाय । 'तुमर्थाच्च भाववचनात्'—इति चतुर्थी । कथम्=किमर्थम् । प्रवर्त्तसे=सप्रयत्नोऽसि उद्यतोऽसि वा ॥ ४४ ॥

त्रिलोकनाथेन सदा मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा ॥ स चेत्स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः ॥ ४५ ॥

त्रिलोकनाथेन=त्रैलोक्यस्वामिना । दिव्यचक्षुषा=अतीन्द्रियज्ञानवता । त्वया=भवता । मखद्विषः=तज्ञशत्रवो विनाशका वा । ननु=खलु । सदा=सर्वदा । नियम्याः=दण्ड्याः । सः= असौ । त्वम्=भवान् । चेत्=यदि । धर्मचारिणाम्=सत्कर्मकारिणाम् । कर्मसु=यज्ञादिसदनुष्ठानेषु । स्वयम्=आत्मनैव । अन्तरायः= विघ्नस्वरूपः निरोधको वा । भवसि=संजायसे । तर्हि=तदा । विधिः=कर्मानुष्ठानम् । च्युतः=नष्टः स्यादेव ॥४५॥

तदङ्गमग्र्यं मघवन् ! महाक्रतोरमुं तुरङ्गं प्रतिमोक्तुमर्हसि ॥ पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ॥ ४६ ॥

हे मघवन् !=हे पुरन्दर ! । तत्=तस्मात् कारणात् । महाक्रतोः=उत्कृष्टयज्ञस्य अश्वमेधस्येत्यर्थः । अग्र्यम्=श्रेष्ठं प्राथमिकं वा । अङ्गम्=साधनम् । अमुम्=इमम् । तुरङ्गम्=वाजिनम् । प्रतिमोक्तुम्=त्यक्तुं प्रतिदातुं वा । अर्हसि=योग्योऽसि । ईश्वराः=समर्थाः । श्रुतेः=वेदस्य । पथः=मार्गस्य । दर्शयितारः=प्रदर्शकाः । ( भवन्ति ) मलीमसाम्=पापात्मनाम् । पद्धतिम्=पन्थानम् । नाददते=नो स्वीकुर्वते ॥ ४६ ॥

इति प्रगल्भं रघुणा समीरितं वचो निशम्याधिपतिर्दिवौकसाम् ॥ निवर्तयामास रथं सविस्मयः प्रचक्रमे च प्रतिवक्तुमुत्तरम् ॥ ४७ ॥

इति=पूर्वोक्तप्रकारेण । रघुणा=तन्नाम्ना दिलीपात्मजेन । समीरितम्=कथितम् । प्रगल्भम्=धृष्टम् । वचः=वाक्यं । निशम्य=श्रुत्वा । दिवौकसाम्=देवानाम् । अधिपतिः=स्वामी देवेन्द्र इत्यर्थः । सविस्मयः=साश्चर्यः सन् । रथम्=स्यन्दनम् । निवर्त्तयामास=निवर्त्तनं चक्रे । उत्तरम्=प्रतिवाचं च । प्रतिवक्तुम्=कथयितुम् । प्रचक्रमे=सन्नद्धो बभूव ॥ ४७ ॥

यदात्थ राजन्यकुमार ! तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः ॥ जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥ ४८ ॥

हे राजन्यकुमार ! =हे क्षत्रियकुमार ! । यद्=वचः । आत्थ=वदासि । तत्तथा=सत्यम् । किन्तु । यशोधनैः=कीर्त्तिद्रव्यैर्व्योक्तिभिः । परतः=शत्रुतः अन्यस्माद्वा । यशस्तु=कीर्तिस्तु । रक्ष्यम्=पालनीयमस्ति । भवद्गुरुः=त्वत् पिता । जगत्प्रकाशम्=लोकात्रेश्रुतमित्यर्थः । अशेषम्=सकलम् । मम=इन्द्रस्य । तद्यशः । इज्यया=यज्ञानुष्ठानेन । लङ्घयितुम्=तिरस्कर्त्तुम् उद्यतः=उद्युक्तोऽस्ति ॥ ४८ ॥

**हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः ॥ तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी नहि शब्द एष नः ॥ ४९ ॥**

यथा=येन प्रकारेण । एकः=अनन्यः । हरिः=विष्णुः । पुरुषोत्तमः=नरश्रेष्ठः । पुरुषेपूत्तम इति सप्तमीसमासः । पुरुषोत्तमनाम्ना प्रसिद्ध इत्यर्थः । यथा=येन प्रकारेण । त्र्यम्बकः=शिवः । महेश्वरः=महांश्चासौ ईश्वरः महेश्वरः । स्मृतः=महेश्वरशब्देन विश्रुतः । अपरः=अन्यो न । तथा=तेन प्रकारेण । मुनयः=मननशीलाः । माम्=इन्द्रम् । शतक्रतुम्=शतक्रतुनामानम् शतयज्ञकर्त्तारमित्यर्थः । विदुः=कथयन्तीत्यर्थः । नः=अस्माकम् । हरिहरेन्द्राणां चेत्यर्थः । एषः=पूर्वोक्तः । पुरुषोत्तममहेश्वरशतक्रतुरूपः शब्दः । द्वितीयगामी=अन्यवाचकः नहि ॥ ४९ ॥

**अतोऽयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयापहारितः ॥ अलं प्रयत्नेन तवात्र मा निधाः पदं पदव्यां सगरस्य सन्ततेः ॥ ५० ॥**

अतः=कारणात् । त्वदीयस्य=भवतः । पितुः=जनकस्य । अयम्=शततमः । अश्वः=हयः । कपिलानुकारिणा=कपिलमुनितुल्येन । मया=इन्द्रेण । अपहारितः=चोरितः । तत्=रघोः । अत्राश्वविषये प्रयत्नेन=उपायेन उद्योगेनेत्यर्थः । अलम्=साध्यं नास्ति । सगरस्य=तन्नाम्नो नृपस्य । सन्ततेः=सन्तानस्य । पदव्याम्=मार्गे । पदम्=चरणम् । मा निधाः=नो निधेहि ॥ ५० ॥

४

ततः प्रहस्यापभयः पुरन्दरं पुनर्बभाषे तुरगस्य रक्षिता ॥ गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान् ॥ ५१ ॥

ततः=इन्द्रवाक्यश्रवणानन्तरम् । तुरंगस्य=अश्वस्य । रक्षिता=गोप्ता पालको वा रघुः । प्रहस्य=हास्यं कृत्वा । अपभयः=निर्भीकः सन् । पुनः=भयः । पुरन्दरम्=सुरेश्वरम् । बभाषे=जगाद । भो=मघवन् ! यदि=चेत् । ते=तव । एषः=उक्तस्वरूपोऽयम् । सर्गः=निश्चयः । तर्हि शस्त्रं=आयुधम् । गृहाण=स्वीकुरु । खलु=निश्चयेन । भवान्=त्वम् । रघुम्=माम् । अनिर्जित्य=मम पराभवं विनेत्यर्थः । कृती=कृतकृत्यः । न भविष्यतीति भावः ॥ ५१ ॥

स एवमुक्त्वा मघवन्तमुन्मुखः करिष्यमाणः सशरं शरासनम् ॥ अतिष्ठदालीढविशेषशोभिना वपुः प्रकर्षेण विडम्बितेश्वरः ॥ ५२ ॥

सः=रघुः । उन्मुखः=ऊर्ध्वाननः सन् । मघवन्तम्=इन्द्रम् । एवम्=इत्थम् । उक्त्वा=कथयित्वा । शरासनम्=धनुः । सशरम्=सबाणम् । करिष्यमाणः=विधास्यमानः । आलीढेन=आलीढाभिधेयेन स्थानविशेषेण । विशेषशोभिना=अतिशयशोभायुक्तेन । वपुःप्रकर्षेण=शरीरोपचयेन । विडम्बितेश्वरः=अनुसृतपिनाकी सन् । अतिष्ठत्=तस्थौ ॥ ५२ ॥

रघोरवष्टम्भमयेन पत्त्रिणा हृदि क्षतो गोत्रभिदप्यमर्षणः ॥ नवाम्बुदानीकमुहूर्तलाञ्छने धनुष्यमोघं समधत्त सायकम् ॥ ५३ ॥

रघोः=दिलीपसूनोः । अवष्टम्भमयेन=स्तम्भरूपेण । पत्त्रिणा=बाणेन । हृदि=उरसि । क्षतः=विद्धः आहत इत्यर्थः । अमर्षणः=सक्रोध इत्यर्थः । गोत्रभिद्=इन्द्रोऽपि । नवाम्बुदानाम्=नव्यमेघानाम् । अनी-

कस्य=समुदायस्य । मुहूर्तम्=क्षणं यावत् । लाञ्छने=चिह्नभूते । धनुषि=दिव्यचापे । अमोघम्=सफलम् । सायकम्=शरं । समधत्त=संहितवान् ॥ ५३ ॥

दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुर-
शोणितोचितः ॥ पपावनास्वादितपूर्वमाशुगः
कुतूहलेनेव मनुष्यशोणितम् ॥ ५४ ॥

भीमानाम्=भयङ्कराणाम् । असुराणाम्=राक्षसानाम् । शोणिते=रक्ते रुधिरपाने इत्यर्थः । उचितः=कृताभ्यासः । सः=इन्द्रमुक्तः । आशुगः=इषुः । दिलीपसूनोः=रघोः । बृहत्=आयतम् । भुजान्तरम्=हृदयम् । प्रविश्य=उपगम्य । अनास्वादितपूर्वम्=नव्यस्वादुयुक्तम् । मनुष्यशोणितम्=नररुधिरम् । कुतूहलेन=औत्सुक्येनेव । पपौ=पानं चकार ॥ ५४ ॥

हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालन-
कर्कशाङ्गुलौ ॥ भुजे शचीपत्रविशेषकाङ्किते
स्वनामचिह्नं निचखान सायकम् ॥ ५५ ॥

कुमारस्य=स्वामिकार्तिकेयस्य । विक्रम इव=शौर्यातिशय इव । विक्रमः=देहजसामर्थ्यं यस्य स तथोक्तः । कुमारोऽपि=रघुरपि । सुरद्विपस्य=ऐरावतस्य । आस्फालनेन=ताडनेन । कर्कशाः=कठिनाः । अङ्गुलयः=करजावयवा यस्य तस्मिन् । शच्याः=इन्द्राण्याः । पत्रविशेषकैः=शृङ्गाररचनाविशिष्टैः । अङ्किते=चिह्निते । हरेः=इन्द्रस्य । भुजे=बाहौ । स्वनामचिह्नम्=स्वाभिधेयाङ्कितम् । सायकम्=शरम् । निचखान=निखातवान् ॥ ५५ ॥

जहार चान्येन मयूरपत्रिणा शरेण शक्रस्य महा-
शनिध्वजम् ॥ चुकोप तस्मै स भृशं सुरश्रियः
प्रसह्य केशव्यपरोपणादिव ॥ ५६ ॥

अन्येन=द्वितीयेन । मयूरपत्रिणा=नीलकण्ठपत्रवता । शरेण=सायकेन । शक्रस्य=इन्द्रस्य । महाशनिध्वजम्=महान्तमशनिरूपध्वजम् । जहार=चिच्छेद च । सः=शक्रः । सुरश्रियः=देवलक्ष्म्याः । प्रसह्य=बलात्कारेण । केशव्यपरोपणात्=केशकर्त्तनादिव । तस्मै=रघवे । भृशम्=अत्यर्थम् । चुकोप=चुक्रोध ॥ ५६ ॥

तयोरुपान्तस्थितसिद्धसैनिकं गरुत्मदाशीविषभीम-
दर्शनैः ॥ बभूव युद्धं तुमुलं जयैषिणोरधोमुखै-
रूर्ध्वमुखैश्च पत्त्रिभिः ॥ ५७ ॥

जयैषिणोः=अन्योन्यविजयाकाङ्क्षिणोः । तयोः=इन्द्ररघ्वोः । गरुत्मन्तः=पक्षवन्तः । ये आशीविषाः=सर्पाः । त इव भीमदर्शनाः=भयङ्करा ये तैः । अधोमुखैः=निम्नवदनैः इन्द्रप्रेरितैरिति यावत् । ऊर्ध्वमुखैः=ऊर्ध्वाननैः रघुप्रेरितैरिति भावः । पत्त्रिभिः=बाणैः । उपान्तस्थिताः=निकटस्थाः । सिद्धाः=देवयोनिविशेषाः । सैनिकाश्च=सेनासमवेताश्च यस्मिंस्तथोक्तम् । तुमुलम्=घोरम् । युद्धम्=रणम् । बभूव=संजातम् ॥ ५७ ॥

अतिप्रबन्धप्रहितास्त्रवृष्टिभिस्तमाश्रयं दुष्प्रसहस्य
तेजसः ॥ शशाक निर्वापयितुं न वासवः स्वत-
श्च्युतं वह्निमिवाद्भिरम्बुदः ॥ ५८ ॥

वासवः=इन्द्रः । अतिप्रबन्धेन=अतिसातत्येन । प्रहिताभिः=प्रयुक्ताभिः । अस्त्रवृष्टिभिः=आयुधवर्षाभिः । दुष्प्रसहस्य=असह्यस्य । तेजसः=प्रतापस्य । आश्रयम्=आधारम् । तम्=रघुम् । अम्बुदः=पयोमुक् । अद्भिः=जलैः । स्वतश्च्युतम्=आत्मजातम् । वह्निमिव=अग्निमिव । निर्वापयितुम्=शमयितुम् । न शशाक=नो समर्थोऽभूत ॥ ५८ ॥

ततः प्रकोष्ठे हरिचन्दनाङ्किते प्रमथ्यमानार्णवधी-
रनादिनीम् ॥ रघुः शशाङ्कार्धमुखेन पत्त्रिणा शरा-
सनज्यामलुनाद्बिडौजसः ॥ ५९ ॥

ततः=तदनन्तरम् । रघुः=दिलीपसूनुः । हरिचन्दनेन=इन्द्रप्रिय-मलयजेन चन्दनेन । अङ्किते=चिह्निते । प्रकोष्ठे=मणिबन्धे । प्रमथ्यमानार्णव इव=आलोड्यमानसमुद्र इव । धीरम्=गम्भीरम् । नदति=शब्दायते तथोक्ताम् । विडौजसः=इन्द्रस्य । शरासनज्याम्=धनुर्मौर्वीम् । शशांकस्यार्धः=चन्द्रखण्ड इव । मुखं=फलं यस्य । तेन पत्रिणा=बाणेन । अलुनात्=अकर्त्तयत् ॥ ५९ ॥

स चापमुत्सृज्य विवृद्धमत्सरः प्रणाशनाय प्रबलस्य विद्विषः ॥ महीध्रपक्षव्यपरोपणोचितं स्फुरत्प्रभामण्डलमस्त्रमाददे ॥ ६० ॥

विवृद्धमत्सरः=प्रवृद्धमन्युः । सः=इन्द्रः । चापं=धनुः । उत्सृज्य=त्यक्त्वा । प्रबलस्य=बलवतः । विद्विषः=शत्रोः । प्रणाशनाय=वधाय । महीध्राणाम्=पर्वतानाम् । पक्षव्यपरोपणे=पक्षच्छेदे । उचितम्=यथार्थम् समर्थमिति यावत् । स्फुरत्=संचलत् । प्रभामण्डलम्=दीप्तिसमूहम् । अस्त्रम्=आयुधम् । आददे=जग्राह ॥ ६० ॥

रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः ॥ निमेषमात्रादवधूय तद्व्यथां सहोत्थितः सैनिकहर्षनिःस्वनैः ॥ ६१ ॥

रघुः=दिलीपतनयः । तेन=वज्रेण । भृशम्=अतिशयम् । वक्षसि=हृदये । ताडितः=हतः सन् । सैनिकानाम्=बलवीराणाम् । अश्रुभिः=नेत्रजलैस्सह । भूमौ=भुवि । पपात=पतितवान् । निमेषमात्रात्=क्षणादेव । तद्व्यथाम्=प्रहरणजनितवेदनाम् । अवधूय=निस्तीर्य । सैनिकानाम्=सेनाभटानाम् । हर्षेण=आनन्देन । ये निःस्वनाः=उच्चनिर्घोषास्तैस्सह । उत्थितः=उत्थितवान् ॥ ६१ ॥

तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य

तस्थुषः ॥ तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥ ६२ ॥

तथापि=वज्रपातेऽपि । शस्त्राणाम्=आयुधानाम् । व्यवहारेण=व्यापारेण निष्ठुरे=क्रूरे कठिने वा । विपक्षभावे=शात्रवे । चिरम्=बहुकालं यावत् । तस्थुषः=स्थितवतः । अस्य=रघोः । वीर्यातिशयेन=तेजोविशेषेण पराक्रमाधिक्येन वा । वृत्रहा=इन्द्रः । तुतोष=सन्तुष्टो बभूव । हि=यतः । सर्वत्र=शत्रुमित्रोदासीनेषु । पदम्=चरणः । गुणैः=शूरत्वादिभिः । निधीयते=स्थाप्यते आरोप्यते वा ॥ ६२ ॥

असङ्गमद्रिष्वपि सारवत्तया न मे त्वदन्येन विसोढमायुधम् ॥ अवेहि मां प्रीतमृते तुरङ्गमात्किमिच्छसीति स्फुटमाह वासवः ॥ ६३ ॥

सारवत्तया=दृढतया । अद्रिष्वपि=पर्वतेष्वपि । असङ्गम्=अप्रतिबन्धम् । मे=मम । आयुधम्=वज्रम् । त्वदन्येन=भवद्व्यतिरिक्तेन केनाप्यन्येनेत्यर्थः । न विसोढम्=नो सहनं कृतम् । अतः कारणात् माम्=इन्द्रम् । तुरङ्गमात्=वाजिनः । ऋते=विना । प्रीतम्=प्रसन्नम् । अवेहि=जानीहि । किमिच्छसि=त्वं किं वाञ्छसि । इति=इत्थम् । वासवः=इन्द्रः । स्फुटम्=स्पष्टम् । आह=जगाद ॥ ६३ ॥

ततो निषङ्गादसमग्रमुद्धृतं सुवर्णपुंखद्युतिरञ्जिताङ्गुलिम् ॥ नरेन्द्रसूनुः प्रतिसंहरन्निषुं प्रियंवदः प्रत्यवदत्सुरेश्वरम् ॥ ६४ ॥

ततः=इति वाक्यश्रवणानन्तरं, इन्द्रसन्तोषानन्तरं वा । निषङ्गात्=तूणीरात् । असमग्रम्=असम्पूर्णम् । उद्धृतम्=आकृष्टम् । सुवर्णपुंखद्युतिभिः=हेमपत्रकान्तिभिः । रञ्जिताः=रागं नीताः । अंगुलयः=करजा येन तम् । इषुम्=शरम् । प्रतिसंहरन्=निवारयन् त्यजन्वा । प्रियंवदः=मधुरवाक् ।

नरेन्द्रसूनुः=नृपात्मजो रघुः। सुरेश्वरम्=इन्द्रम् । प्रत्यवदत्=प्रत्यवोचत् ॥ ६४ ॥

अमोच्यमश्वं यदि मन्यसे प्रभो ! ततः समाप्ते विधिनैव कर्मणि ॥ अजस्रदीक्षाप्रयतः स मद्गुरुः क्रतोरशेषेण फलेन युज्यताम् ॥ ६५ ॥

हे प्रभो !=भो स्वामिन् ! । यदि=चेत्। अश्वम्=तुरंगम् । अमोच्यम्=अत्याज्यम् । मन्यसे=स्वीकरोषि । ततः=तर्हि । अजस्रदीक्षायाम्=सततयागकर्मणि। प्रयतः=नियमस्थितः। स मद्गुरुः=मम जनकः। विधिनैव=यथोचितरीत्यैव । कर्मणि=यज्ञरूपे कर्मणि । समाप्ते=परिपूर्णे सति । क्रतोः=अश्वमेधयागस्य । अशेषेण=अखिलेन । फलेन=साध्यांशेन । युज्यताम्=युक्तः क्रियताम् ॥ ६५ ॥

यथा च वृत्तान्तमिमं सदोगतस्त्रिलोचनैकांशतया दुरासदः ॥ तवैव संदेशहराद्विशांपतिः शृणोति लोकेश ! तथा विधीयताम् ॥ ६६ ॥

सदोगतः=यज्ञशालायामुपस्थितः । त्रिलोचनस्य=शिवस्य । एकांशतया=एकमूर्त्या । दुरासदः=दुष्प्रधर्षः । विशाम्पतिः=प्रजेश्वरः । यथा=येन प्रकारेण। इमम्=एतद्वर्त्तमानम् । वृत्तान्तम्=समाचारम्। तवैव=भवत एव । संदेशहराद्=वार्त्ताहरात् दूतमुखादित्यर्थः । शृणोति=जानातीति भावः। हे लोकेश !=हे इन्द्र ! । तथा=तेन प्रकारेण। विधीयताम्=क्रियताम् ॥ ६६ ॥

तथेति कामं प्रतिशुश्रुवान् रघोर्यथागतं मातलिसारथिर्ययौ॥ नृपस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्तत ॥ ६७ ॥

---

१ अत्र च 'सदस्' कथनेन यज्ञशालीया सभा गृह्यते ॥

मातलिसारथिः=इन्द्रः । रघोः=दिलीपात्मजस्य । कामम्=मनोरथम् । तथेति=तथास्त्विति । प्रतिशुश्रुवान्=स्वीकुर्वन् । यथागतम्=देवलोकम् । ययौ=जगाम । सुदक्षिणासूनुः=रघुरपि । नातिप्रमनाः=अश्वनाशान्नातीव प्रसन्नः सन् । नृपस्य=दिलीपस्य । सदोगृहम्=सभासद्म प्रति । न्यवर्त्तत=ययौ ॥ ६७ ॥

तमभ्यनन्दत्प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः ॥ परामृषन् हर्षजडेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥ ६८ ॥

हरेः=देवेन्द्रस्य । शासनहारिणा=दूतेन । प्रथमम्=प्रागेव । प्रबोधितः=विज्ञापितः विदितवृत्त इति भावः । प्रजेश्वरः=नराधिपो दिलीपः । हर्षजडेन=आनन्दशिथिलेन । पाणिना=हस्तेन । कुलिशव्रणाङ्कितम्=वज्रक्षताचिह्नितम् । तदयिम्=रघुसम्बन्धि । अङ्गम्=शरीरम् । परामृषन्=स्पृशन् । तम्=रघुम् । अभ्यनन्दत्=सन्तोषयामास ॥ ६८ ॥

इति क्षितीशो नवतिं नवाधिकां महाक्रतूनां महनीयशासनः ॥ समारुरुक्षुर्दिवमायुषः क्षये ततान सोपानपरम्परामिव ॥ ६९ ॥

महनीयशासनः=माननीयाज्ञः । क्षितीशः=भूपतिर्दिलीपः । इति=उक्तप्रकारेण । महाक्रतूनाम्=दीर्घयज्ञानाम् । नवभिः=नवसङ्ख्याभिः । अधिकाम्=विशिष्टाम् । नवतिम्=नवतिसङ्ख्याम् । आयुषः क्षये=जीवनावसाने सति । दिवम्=स्वर्गम् । समारुरुक्षुः=आरोढुमिच्छुः । सोपानानाम्=आरोहणसाधनानाम् । परम्पराम्=श्रेणिमिव । ततान=विस्तारयामास रचितवानित्यर्थः ॥ ६९ ॥

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे ।
नृपतिककुदं दत्त्वा यूने सितातपवारणम् ॥

मुनिवनतरुच्छायां देव्या तया सह शिश्रिये ।
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ७० ॥

अथ=एकोनशतयज्ञसमाप्त्यनन्तरम् । विषयेभ्यः=रूपरसादिसांसारिकविषयेभ्यः । व्यावृत्तः=प्रतिनिवृत्तो आत्मा=अन्तःकरणं यस्य सः=निवृत्तचेता इत्यर्थः । सः=दिलीपः । यथाविधि=यथाशास्त्रम् । यूने=तरुणाय । सूनवे=पुत्राय । नृपतिककुदम्=राजचिह्नम् । सितातपवारणम्=श्वेतच्छत्रम् । दत्वा=समर्प्य । तया=सुदक्षिणया । देव्या=महिष्या सह (देवी कृताभिषेकायामितरासु च भट्टिनीत्यमरः) । मुनिवनतरोः=आश्रमवृक्षस्य तपोवनशाखिनो वा । छायाम्=अनातपम् । शिश्रिये=आश्रितवान् । हि=यस्मात् कारणात् । गलितवयसाम्=वृद्धानाम् । इक्ष्वाकूणाम्=इक्ष्वाकुकुलजानाम् । इदम्=वानप्रस्थसंज्ञकं तृतीयाश्रमार्थं वनगमनम् । कुलव्रतम्=वंशनियमः अस्तीति शेषः ॥ ७० ॥

इति श्रीव्रजरत्नभट्टाचार्यकृतौ रघुवंशविवृतौ
तृतीयः सर्गः समाप्तः ।

---

## ॥ अथ चतुर्थः सर्गः ॥

---

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ॥
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ १ ॥

सः=रघुः । गुरुणा=पित्रा । दत्तम्=अर्पितम् । राज्यम्=राजकार्य्यम् । प्रातिपद्य=लब्ध्वा । दिनान्ते=सन्ध्यासमये । सावित्रा=सूर्येण । निहितम्=स्थापितम् । तेजः=प्रतापः । हुताशन इव=अग्निरिव । अधिकम्=अत्यर्थम् । बभौ=शुशुभे ॥ १ ॥

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ॥
पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥ २ ॥

दिलीपानन्तरम्=दिलीपपश्चात् । राज्ये=राजसिंहासने । प्रतिष्ठितम्=अवस्थितं प्रविष्टं वा । तम्=रघुम् । निशम्य=श्रुत्वा । पूर्वम्=दिलीपसमये । राज्ञाम्=अन्यदेशस्थानां प्रतिपक्षिनृपालानाम् । हृदये=मनसि । प्रधूमितः=सधूमः । अग्निः=वैरवह्निः । उत्थितः=प्रज्वलित इव ॥ २ ॥

पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः ॥
नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥ ३ ॥

पुरुहूतध्वजस्य=इन्द्रध्वजस्येव[1] । तस्य=रघोः । नवाभ्युत्थानदर्शिन्यः=नूतनाभ्युदयावलोकिन्यः । उन्नयनपङ्क्तयः=उद्गतनेत्रश्रेणयः । सप्रजाः=ससन्तानाः । प्रजाः=लोकाः । ननन्दुः=जहर्षुः ॥ ३ ॥

सममेव समाक्रान्तं द्वयं द्विरदगामिना ॥
तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम् ॥ ४ ॥

द्विरदगामिना=गजेन्द्रगतिना । तेन=रघुणा । पित्र्यम्=पितृसम्बन्धि । सिंहासनम्=राजासनम् । अखिलम्=सकलम् । अरिमण्डलम्=वैरिसमूहं चैतद् द्वयमुभयम् । सममेव=युगपदेव । समाक्रान्तमाधिष्ठितम् ॥ ४ ॥

छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ॥
पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम् ॥ ५ ॥

पद्मा=लक्ष्मीः । स्वयम्=आत्मना । अदृश्या=अलक्षिता । किल=ध्रुवम् । छायामण्डलक्ष्येण=कान्तिपुञ्जव्याजेन । पद्मातपत्रेण=कमलच्छत्रेण । साम्राज्ये=सम्राट्कृत्ये । दीक्षितम्=अभिषिक्तम् । तम्=रघुम् । भेजे=सिषेवे ॥ ५ ॥

---

1 इन्द्रपताकायारित्यर्थः ।

परिकल्पितसांनिध्या कालेकाले च बन्दिषु ॥
स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती ॥ ६ ॥

सरस्वती=वाणी । वन्दिषु=स्तुतिपाठकेषु । कालेकाले=यथासमयम् । परिकल्पितसान्निध्या=परिकल्पितं कृतं सान्निध्यं सामीप्यं यया सा कृतसन्निधानेत्यर्थः । अर्थ्याभिः=अर्थयुक्ताभिः । स्तुतीभिः=स्तोत्रैः । स्तुत्यम्=स्तोत्रार्हम् । उपतस्थे=प्राप्तवती ॥ ६ ॥

मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः ॥
तथाप्यनन्यपूर्वेव तस्मिन्नासीद्वसुन्धरा ॥ ७ ॥

वसुन्धरा=भूमिः । मनुप्रभृतिभिः=मन्वादिभिः । मान्यैः=पूज्यैः प्रतिष्ठितैर्वा । राजभिः=नृपैः । यद्यपि भुक्ता=सेविता । तथापि तस्मिन्=रघौ । अनन्यपूर्वेव=अभुक्तपूर्वेव नूतनेव वा । आसीत्=अभूत् ॥ ७ ॥

स हि सर्वस्य लोकस्य युक्तदण्डतया मनः ॥
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥ ८ ॥

हि=निश्चयेन । सः=रघुः । युक्तदण्डतया=यथापराधदण्डदानेन । सर्वस्य=अखिलस्य । लोकस्य=जनस्य जगतो वा । मनः=चेतः । अतिशीतोऽत्युष्णो वा न भवतीति नातिशीतोष्णः । नात्यर्थं शीतलप्रखरः । दक्षिणः=दक्षिणादिग्भवः । नभस्वानिव=वायुरिव । आददे=स्वायत्तं चक्रे ॥ ८ ॥

मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ ॥
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥ ९ ॥

तेन=रघुणा । गुणाधिकतया=गुणाधिक्येन हेतुना । प्रजाः=लोकाः । सहकारस्य=आम्रस्य । फलेन=प्रसवेन । पुष्पोद्गमे=प्रसूनोदये इव । गुरौ=दिलीपविषये । मन्दोत्कण्ठाः=अल्पौत्सुक्याः । कृताः=विहिताः ॥ ९ ॥

नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम् ॥
पूर्व एवाभवत्पक्षस्तस्मिन्नाभवदुत्तरः ॥ १० ॥

नयविद्भिः= नीतिज्ञैः । नवे=नूतने । राज्ञि=भूपे रघौ । सत्=राजोचितं धर्मकृत्यम् । असच्च=भूपानर्हकार्यमपि । उपदर्शितम्=प्रतिबोधितं । शिक्षितं वा । तस्मिन्=राज्ञि । पूर्व एव पक्षः=शास्त्रविहितः सत्पक्ष एव । अभवत्=आसीत् । उत्तरः पक्षः=असत्पक्षः । नाभवत्=नासीत् ॥ १० ॥

पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः ॥
नवे तस्मिन्महीपाले सर्वं नवमिवाभवत् ॥ ११ ॥

पञ्चानां भूतानामपि=पृथिव्यप्तेजोवाय्वाकाशानाम् । गुणाः=गन्धरूपरसस्पर्शशब्दाः । उत्कर्षम्=अतिशयम् । पुपुषुः=पुष्टिं ययुः । तस्मिन्=रघौ । नवे=नूतने । महीपाले=राज्ञि । सर्वम्=वस्तुजातम् । नवमिवाभवत्=नव्यमिवसंजातम् ॥ ११ ॥

यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ॥
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥१२॥

यथा=येन प्रकारेण । प्रह्लादनात्=हर्षप्रदानात् । चन्द्रः=चन्द्रमाः । यथा=येन प्रकारेण । प्रतापात्=सन्तापहेतोः । तपनः=सूर्यः । तथैव=तेन प्रकारेणैव । सः=राजा रघुः । प्रकृतेः=प्रजायाः । रञ्जनात्=आनन्ददानात् । अन्वर्थः=यथार्थनामा । अभत्=आसीत् ॥ १२ ॥

कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने ॥
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना ॥ १३ ॥

तस्य=रघोः । कर्णान्तयोः=श्रवणान्तयोः श्रवणपर्यन्तमित्यर्थः । विश्रान्ते=विस्तृते । कामम्=यथेच्छम् । विशाले=दीर्घे । लोचने=नेत्रे । आस्ताम् । सूक्ष्मकार्याणाम्=कुशाग्रबुद्धिग्राह्यकर्त्तव्याणाम् ।

अर्थान्=प्रयोजनानि । दर्शयति=प्रकाशयति तादृशेन । शास्त्रेण=तन्त्रेणैव । चक्षुष्मत्ता=नेत्रफलं तु । आसीत्=बभूव ॥ १३ ॥

लब्धप्रशमनस्वस्थमथैनं समुपस्थिता ॥
पार्थिवश्रीर्द्वितीयेव शरत्पङ्कजलक्षणा ॥ १४ ॥

अथ=राज्याभिषेकानन्तरम् । लब्धस्य=प्राप्तराज्यस्य । प्रशमनेन=परिपन्थिनामनुरञ्जनप्रतीकाराभ्यां दृढीकरणेन । स्वस्थम्=सावधानचित्तम् । एनम्=रघुम् । पङ्कजलक्षणा=पद्मचिह्ना । शरदृतुः । द्वितीया=अपरा । पार्थिवश्रीरिव=राजलक्ष्मीरिव । समुपस्थिता=सम्प्राप्ता ॥ १४॥

निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मा सुदुःसहः ॥
प्रतापस्तस्य भानोश्च युगपद्व्यानशे दिशः ॥ १५ ॥

निर्वृष्टाः=त्यक्तजलाः । अतएव लघवः ह्रस्वास्तैः । मेघैः=घनैः । मुक्तवर्त्मा=त्यक्तमार्गः । तस्य=रघोः । भानोश्च=रवेः च । सुदुःसहः=सोढुमनर्हः । प्रतापः=तेजः । दिशः=काष्ठाः । युगपद्=समम् । व्यानशे=व्याप ॥ १५ ॥

वार्षिकं संजहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ॥
प्रजार्थसाधने तौ हि पर्यायोद्यतकार्मुकौ ॥ १६ ॥

इन्द्रः=शक्रः । वार्षिकम्=वर्षासु भवं वृष्टिनिमित्तकमित्यर्थः । धनुः=कोदण्डम् । संजहार=दूरीचकार । रघुः=दिलीपसूनुः । जैत्रम्=विजयशीलम् । धनुर्दधौ=अगृह्णात् । हि=यतः । प्रजानाम्=लोकानाम् । अर्थस्य=प्रयोजनस्य । साधने=साधनविषये । तौ=इन्द्ररघू । पर्यायेण=क्रमेण । उद्यते=उत्थापिते । कार्मुके=धनुषी याभ्यां तौ । आस्ताम्=बभूवतुः ॥ १६ ॥

पुण्डरीकातपत्रस्तं विकसत्काशचामरः ॥
ऋतुर्विडम्बयामास न पुनः प्राप तच्छ्रियम् ॥ १७ ॥

पुण्डरीकम्=श्वेतकमलमेव आतपत्रम्=छत्रं यस्य । विकसन्ति=प्रफुल्लन्ति । काशानि=तृणकुसुमानि । चामराणि=वालव्यजनानि यस्य सः । ऋतुः=शरद् । तम्=रघुम् । विडम्बयामास=तिरश्चकार । पुनस्तथापि तस्य=रघोः । श्रियम्=शोभाम् । न प्राप=नो प्रपेदे ॥ १७ ॥

प्रसादसुमुखे तस्मिंश्चन्द्रे च विशदप्रभे ॥
तदा चक्षुष्मतां प्रीतिरासीत्समरसा द्वयोः ॥ १८ ॥

प्रसादेन=प्रसन्नतया । सुमुखे=शोभनानने । तस्मिन्=रघौ । विशदप्रभे=निर्मलकान्तौ । चन्द्रे च=शशिनि च । द्वयोः=उभयोः । तदा=तस्मिन् काले । चक्षुष्मताम्=लोचनवताम् । प्रीतिः=प्रेम । समरसा=तुल्या आसीत्=बभूव ॥ १८ ॥

हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु ॥
विभूतयस्तदीयानां पर्यस्ता यशसामिव ॥ १९ ॥

हंसानाम्=मानससरोवरनिवासिनां पक्षिविशेषाणाम् । श्रेणीषु=पङ्क्तिषु । तारासु=नक्षत्रेषु । कुमुद्वत्सु=श्वेतकमलयुक्तेषु । वारिषु=अप्सु च । तदीयानाम्=रघुसम्बन्धिनाम् । यशसां=कीर्तीनामिव । विभूतयः=सम्पदः । पर्यस्ताः=विकिरिता इव ॥ १९ ॥

इक्षुच्छायानिषादिन्यस्तस्य गोप्तुर्गुणोदयम् ॥
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ॥ २० ॥

इक्षूणाम्=रसकाण्डानाम् । छायासु=अनातपेषु । निषादिन्यः=उपविष्टाः । शालिगोप्यः=सस्यपालिकाः । गोप्तुः=रक्षकस्य । तस्य=रघोः । गुणोदयम्=दयादाक्षिण्यादिगुणसमूहम् । आकुमारम्=बालादारभ्य । कथोद्घातम्=कथारम्भो यस्य तत् । यशः=कीर्त्तिम् । जगुः=गायन्ति स्म ॥ २० ॥

प्रससादोदयादम्भः कुम्भयोनेर्महौजसः ॥
रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥ २१ ॥

महौजसः=अतिपराक्रमयुक्तस्य । कुम्भयोनेः=अगस्त्यस्य । उदयात्=प्रादुर्भावात् । अम्भः=जलम् । प्रससाद=प्रसन्नमभूत् । रघोः=दिलीपसूनोः । अभिभवस्य=तिरस्कारस्य । आशङ्कि=सशंकम् । द्विषताम्=अरीणाम् । मनः=मानसम् । चुक्षुभे=विकारं प्राप ॥ २१ ॥

मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः ॥
लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ २२ ॥

मदोदग्राः=मदेनोन्मत्ततया उदग्रा उन्मत्ता उन्मदा इत्यर्थः । मदोन्मत्ताः । ककुद्मन्तः=गुरुस्कन्धाः । सरिताम्=नदीनाम् । कूलानि=तटानि । उद्रुजाः=उत्खनन्तः । महोक्षाः=बलीवर्दाः । तस्य=रघोः । लीलाखेलम्=केलिक्रीडां विलाससुभगं वा । विक्रमम्=शौर्यम् । अनुप्रापुः=अनुलेभिरे ॥ २२ ॥

प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः ॥
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥ २३ ॥

सप्तपर्णानाम्=सप्तच्छदवृक्षविशेषाणाम् । प्रसवैः=विकासितकुसुमैः । मदगन्धिभिः=मदस्येव दानस्येव गन्धः सौरभं येषां तैः । आहताः=प्रेरिताः । तस्य=रघोः । नागाः=गजाः । असूययेव=स्पर्द्धयेव । सप्तधा=सप्तप्रकारेणैव । प्रसुस्रुवुः=मदं ववृषुः ॥ २३ ॥

सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् ॥
यात्रायै चोदयामास तं शक्तेः प्रथमं शरत् ॥ २४ ॥

शरत्=शरदृतुः । सरितः=नदीः । गाधाः=सुप्रतराः । कुर्वती=विदधती । पथश्च=मार्गांश्च । आश्यानकर्दमान्=शुष्कपंकान् । कुर्वती । शक्तेः=पराक्रमस्य । प्रथमम्=प्राक् । तम्=रघुम् । यात्रायै=दिग्विजयाय । चोदयामास=प्रेरयांबभूव ॥ २४ ॥

तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ ॥
प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥ २५ ॥

वाजिनाम्=हयानाम् । नीराजनाविधौ=नीराजनाख्ये शान्तिकर्मणि । सम्यक्=योग्यतया । हुतः=तर्पितः । वह्निः=अग्निः । तस्मै=रघवे । प्रगतादक्षिणम्=प्रदक्षिणम् । याऽर्चिः=ज्वाला । तस्या व्याजेन=छद्मना परिक्रमणमिषेण । हस्तेनेव=पाणिनेव । जयम्=विजयम् । ददौ=दत्तवान् ॥ २५ ॥

स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ॥
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ २६ ॥

गुप्तौ=रक्षितौ । मूलम्=स्वराजधानी । प्रत्यन्तः=प्रान्तः, दुर्गश्च येन सः । शुद्धपार्ष्णिः=उद्धृतपृष्ठशत्रुः । अयान्वितः=शुभदैवसमेतः । सः=रघुः । षड्विधम्=मौलभृत्यादिरूपम् । बलम्=सैन्यम् । आदाय=गृहीत्वा । दिशाम्=आशानाम् । जिगीषया=विजेतुमिच्छया । प्रतस्थे=चचाल ॥ २६ ॥

अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः ॥
पृषतैर्मन्दरोद्धूतैः क्षीरोर्मय इवाच्युतम् ॥ २७ ॥

वयोवृद्धाः=वयसि अवस्थायां वृद्धाः जरठाः । पौरयोषितः=नागरनार्यः । लाजैः=भृष्टधान्यैः । तम्=रघुम् । मन्दरोद्धूतैः=मन्दरगिर्युत्थापितैः । पृषतैः=बिन्दुभिः । क्षीरोर्मयः=पयःसागरतरङ्गाः । अच्युतम्=विष्णुमिव । अवाकिरन्=ववृपुः ॥ २७ ॥

स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा ॥
अहिताननिलोद्धूतैस्तर्जयन्निव केतुभिः ॥ २८ ॥

प्राचीनबर्हिषा=इन्द्रेण । तुल्यः=सदृशः । सः=रघुः । अनिलोद्धूतैः=पवनकम्पितैः । केतुभिः=पताकाभिः । अहितान्=शत्रून् । तर्जयन्निव । निर्भर्त्सयन्निव । प्रथमम्=पूर्वम् । प्राचीम्=पूर्वदिशाम् । ययौ=इयाय ॥ २८ ॥

रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः ॥
भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥ २९ ॥

स्यन्दनैः=रथैः । उद्धूतैः=उत्थापितैः । रजोभिः=पांशुभिः । घनसन्निभैः=मेघसदृशैः । गजैः=करिभिश्च । व्योम=आकाशम् । भुवस्तलमिव=धरातलमिव । भूतलम्=धरि[illegible]म् । व्योमेव=आकाशमिव । कुर्वन्=संपादयन् । सन्=ययौ ॥ २९ ॥

प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ॥
ययौ पश्चाद्रथादीति चतुःस्कन्धेव सा चमूः ॥ ३० ॥

अग्रे=पुरः । प्रतापः=तेजः । ततः=तत्पश्चात् । शब्दः=सेनाकोलाहलः । तदनन्तरम्=तदनु । परागः=धूलिः । पश्चात्=अनन्तरम् रथादीति=रथाश्वादिकम् । चतुःस्कन्धेव=चतुर्व्यूहेव । सा चमूः=असौ सेना । ययौ=जगाम ॥ ३० ॥

मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ॥
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥ ३१ ॥

सः=रघुः । शक्तिमत्त्वात्=समर्थत्वात् प्रभुत्वाद्वा । मरुपृष्ठानि=निर्जलस्थानानि । उदम्भांसि=उद्भूतजलानि । विपिनानि=अरण्यानि । प्रकाशानि=छिन्नवृक्षाणि । नदीः=सरितः । सुप्रतराः=सुखेन तार्याः । नाव्याः=नौकाभिस्तार्याः । चकार=विदधे ॥ ३१ ॥

स सेनां महतीं कर्षन् पूर्वसागरगामिनीम् ॥
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥ ३२ ॥

सः=रघुः । महतीम्=बहुलाम् । पूर्वसागरगामिनीम्=प्राक्सिन्धुगच्छन्तीम् । सेनाम्=चमूम् । कर्षन्=वहन् । हरस्य=शिवस्य । जटाभ्यः=बद्धकेशेभ्यः । भ्रष्टाम्=च्युताम् । गङ्गाम्=मन्दाकिनीम् । भगीरथः इव=दिलीपात्मज इव । बभौ=शुशुभे ॥ ३२ ॥

त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः ॥
तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः ॥ ३३ ॥

फलम्=शुभम् प्रसवं च । त्याजितैः=हारितैः । उत्खातैः=स्वपदाच्च्यावितैरन्यत्रोत्पाटितैः । बहुधा=अनेकशः । भग्नैः=रणे जितैरन्यत्र भिन्नैः । नृपैः=राजभिः । पादपैश्च=तरुभिश्च । दन्तिनः=गजस्येव । तस्य=रघोः । मार्गः=पन्थाः । उल्बणः=प्रकाशः । असीत्=अभवत् ॥ ३३ ॥

पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी ॥
प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ ३४ ॥

जयी=विजयशीलो रघुः । पौरस्त्यानेवम्=प्राच्यानेवम् । तांस्तान्=सर्वान्, अखिलान् । जनपदान्=देशान् । आक्रामन्=तेजसा व्याप्नुवन् स्वाधीनं कुर्वन्वा । तालीवनैः=वृक्षविशिष्टारण्यैः । तालीशवृक्षैर्वा । श्यामम्=कृष्णवर्णम् । महोदधेः=सागरस्य । उपकण्ठम्=अन्तिकम् । प्राप=लेभे ॥ ३४ ॥

अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव ॥
आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम् ॥ ३५ ॥

अनम्राणाम्=अविनयीनाम् । समुद्धर्तुः=उन्मूलयितुः उत्पाटनशीलस्येत्यर्थः । तस्मात्=रघोः सकाशात् । सुह्मैः=सुह्मदेशोत्पन्नैः क्षत्रियैः । वैतसीम्=वेतसम्बन्धिनीम् । वृत्तिम्=रीतिं क्रियां वा । आश्रित्य=अङ्गीकृत्य । सिन्धुरयादिव=नदीवेगादिव । आत्मा=स्वीयदेहः आत्मनो राष्ट्रादिकमित्यर्थः । संरक्षितः=सम्यग्गोपायितः ॥ ३५ ॥

वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ॥
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः ॥३६॥

नेता=नायकः । सः=रघुः । नौभिः=नौकाभिः । साधनेन=सिद्धिहेतुना । उद्यतान्=उद्युक्तान् सन्नद्धान् वा । वङ्गान्=वङ्गवासिनः ।

तरसा=बलेन । उत्खाय=उत्पाट्य । गङ्गायाः=भागीरथ्याः । स्रोतसाम्=प्रवाहाणाम् । अन्तरेषु=द्वीपेषु । जयस्तम्भान्=विजयस्तम्भान् विजयस्थूणा इत्यर्थः । निचखान=स्थापयामास ॥ ३६ ॥

आपादपद्मप्रणताः कलमा इव ते रघुम् ॥
फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः ॥ ३७ ॥

आपादपद्मम्=चरणकमलपर्यन्तम् । प्रणताः=नम्राः । आदावुत्खाताः=उत्पाटिताः । पश्चात्प्रतिरोपिताः=स्थापिताः । ते=वाङ्गालाः । कलमा इव=शालय इव । रघुम्=दिलीपपुत्रम् । फलैः=धनैरन्यत्र सस्यैश्च । संवर्धयामासुः=एधयामासुः ॥ ३७ ॥

स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः ॥
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥ ३८ ॥

सः=रघुः । बद्धः=नियन्त्रितः । द्विरदैः=हस्तिभिः। सेतुः=तरणसाधनम्, यैस्तैः । सैन्यैः=बलैः । कपिशाम्=नामनदीम् । तीर्त्वा=निस्तीर्य । उत्कलैः=उत्कलदेशिकनृपैः । आदर्शितपथः=प्रदर्शितमार्गः सन् । कलिङ्गाभिमुखः=कलिङ्गदेशोन्मुखः । ययौ=जगाम ॥ ३८ ॥

स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत ॥
अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥ ३९ ॥

सः=रघुः । महेन्द्रस्य=जंबुद्वीपस्थपर्वतस्य । मूर्ध्नि=मस्तकप्रदेशे । तीक्ष्णम्=तीव्रमसह्यं वा । प्रतापम्=तेजः । यन्ता=हस्तिपकः । गम्भीरवेदिनः=हस्तिविशिष्टस्य । द्विरदस्य=करिणः । अङ्कुशम्=सृणिमिव । न्यवेशयत्=संक्षिप्तवान् ॥ ३९ ॥

---

१ चिरकालेन यो वेत्ति शिक्षां परिचितामपि । गंभीरवेदिदी विज्ञेयः स गजः सर्वपंडितैः ॥ त्वग्भेदात शोणितस्रावात् मांसस्य क्रथनादपि । आत्मानं यो न जानाति स स्याद्गंभीरवेदिकः ॥

प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ॥
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ ४० ॥

गजाः=हस्तिनः । साधनानि=युद्धसहाया यस्य सः । कालिङ्गः=कलिङ्गाधिपतिः । अस्त्रैः=प्रहरणैः आयुधैर्वा । तम्=रघुम् । पक्षाणाम्=उत्पतनसाधनानाम् । छेदोद्यतम्=कर्त्तने सन्नद्धम् । शक्रम्=इन्द्रम् । शिलावर्षी=पाषाणवर्षी । पर्वत इव=गिरिरिव । प्रतिजग्राह=प्रत्यभियुक्तवान् ॥ ४० ॥

द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ॥
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥ ४१ ॥

काकुत्स्थः=रघुः । तत्र=महेन्द्राद्रौ । द्विषाम्=शत्रूणाम् । नाराचानाम्=बाणविशेषाणाम् । दुर्दिनम्=वर्षणम् । विषह्य=सहित्वा । सन्मङ्गलस्नात इव=विजयमङ्गलार्थमभिषिक्त इव । जयश्रियम्=विजयलक्ष्मीम् । प्रतिपेदे=लेभे ॥ ४१ ॥

ताम्बूलीनां दलैस्तत्र रचितापानभूमयः ॥
नारिकेलासवं योधाः शात्रवं च पपुर्यशः ॥ ४२ ॥

तत्र=महेन्द्राद्रौ । ताम्बूलीनाम्=नागवल्लीनाम् । दलैः=पत्रैः । रचिताः=निर्मिताः । अपानभूमयः=सम्भूयसुरादिपानयोग्यस्थानानि यैस्ते । योधाः=भटाः । नारिकेलासवम्=नालिकेरमद्यम् । शात्रवम्=अरिसम्बंधि । यशश्च=कीर्त्तिं च । पपुः=अपुः । जहुरित्यर्थः ॥ ४२ ॥

गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः ॥
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥ ४३ ॥

धर्म्मार्थम्=पुण्यार्थम् । विजयी=विजयशीलः यद्वा । धर्मेण=नीत्युक्तविधिना विजेतुं परानितिभावः शीलं स्वभावो यस्य । सः=नृपः=जनाधिपःरघुः । आदौ गृहीतः पश्चात् प्रतिमुक्तः=परित्यक्तस्तस्य । महेन्द्रनाथस्य=कालि-

ङ्गस्य । श्रियम्=लक्ष्मीम् । जहार=अहारीत् । मेदिनीम्=भूमिम् । नतु जहार ॥ ४३ ॥

ततो वेलातटेनैव फलवत्पूगमालिना ॥
अगस्त्याचरितामाशामनाशास्यजयो ययौ ॥ ४४ ॥

ततः=तदनन्तरम् । फलवत्पूगमालिना=फलितक्रमुकपंक्तियुक्तेन । वेलायाः=समुद्रस्य । तटेनैव=उपान्तेनैव । अगस्त्याचरिताम्=कुम्भजाश्रिताम् । आशाम्=दक्षिणदिशाम् । अनाशास्यजयः=नैसर्गिकविजयशीलः । ययौ=जगाम ॥ ४४ ॥

स सैन्यपरिभोगेण गजदानसुगन्धिना ॥
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥ ४५ ॥

सः=रघुः । गजानाम्=करिणाम् । दानेन=मदेन । सुगन्धिना=सौरभेण । सैन्यपरिभोगेण=बलविहारेण अनीकक्रीडया वा । कावेरीम्=एतन्नामिकां नदीम् । सरिताम्=नदीनाम् । पत्युः=सागरस्य । शङ्कनीयामिव=संशयविधायिकाम् । अकरोत्—अकार्षीत् ॥ ४५ ॥

बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः ॥
मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः ॥ ४६ ॥

विजिगीषोः=जेतुकामस्य । गताध्वनः=अतीतमार्गस्य । तस्य=रघोः । बलैः=अनीकैः । मारीचेषु=मारीचवनेषु । उद्भ्रान्ताः=उच्चलिताः । हारीताः=पक्षिविशेषा यासु ताः । मलयाद्रेः=मलयगिरेः । उपत्यकाः=आसन्नभूमयः । अध्युषिताः=अधिष्ठिताः ॥ ४६ ॥

ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः ॥
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥ ४७ ॥

अश्वैः=हयैः । क्षुण्णानाम्=पिष्टानाम् चूर्णितानां वा । एलानाम्=एलालतानाम् । उत्पतिष्णवः=उद्गमनशीलाः । फलरेणवः=फलरजांसि ।

मत्तानाम्=उन्मदानाम् । इभानाम्=गजानां । तुल्यगन्धिषु=सदृशमोदेषु करटेषु=गण्डस्थलेषु । ससञ्जुः=संलग्ना बभूवुः ॥ ४७ ॥

भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ॥
नास्रसत्करिणां ग्रैवं त्रिपदीछेदिनामपि ॥ ४८ ॥

चन्दनानाम्=चन्दनतरूणाम् । भोगिवेष्टनमार्गेषु=सर्पवेष्टनान्निम्नेषु । समर्पितम्=सज्जितम् । त्रिपदीच्छेदिनाम्=पादशृङ्खलच्छेदकानामपि । करिणाम्=दन्तिनाम् । ग्रैवम्=गलबन्धनम् । नास्रसत्=नापतत् ॥ ४८ ॥

दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ॥
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ४९ ॥

दक्षिणस्याम्=याम्यायां । दिशि=काष्ठायाम् । रवेरपि=सूर्यस्यापि । तेजः=प्रतापः । मन्दायते=मन्दं भवति । तस्यामेव=दक्षिणस्यामेव दिशि । रघोः=दिलीपसूनोः । प्रतापम्=तेजः । पाण्ड्याः=पाण्डूनां जनपदानां राजानः पाण्डूदेशिकभूपाः । न विषेहिरे=नो सोढवन्तः ॥ ४९ ॥

ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः ॥
ते निपत्य ददुस्तस्मै यशः स्वमिव संचितम् ॥ ५० ॥

ते=प्रागुक्तराजानः । ताम्रपर्ण्या=तदाख्यनद्या । समेतस्य=सम्मिलितस्य । महोदधेः=समुद्रस्य । मुक्तासारम्=मौक्तिकप्रकर्षम् । साञ्चितम्=अर्जितम् । स्वम्=नैजम् । यश इव=कीर्तिमिव । तस्मै=रघवे । निपत्य=प्रणिपत्य । ददुः=अर्पितवन्तः ॥ ५० ॥

स निर्विश्य यथाकामं तटेष्वालीनचन्दनौ ॥
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ ॥ ५१ ॥
असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता ॥
नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत ॥ ५२ ॥

असह्यविक्रमः=उग्रबलः । सः=रघुः । तटेषु=प्रान्तेषु । आलिप्तचन्दनौ=व्याप्तश्रीखण्डवृक्षौ । स्तनपक्षे प्रान्तेषु चन्दनानुलिप्तौ । तस्याः=दक्षिणस्याः । दिशः=ककुभः । स्तनाविव=कुचाविव । मलयदर्दुरौ=तन्नामकौ । शैलौ=पर्वतौ । यथाकामम्=यथेच्छम् । निविश्य=उपभुज्य । उदन्वता=समुद्रेण । दूरात्=विप्रकृष्टात् । मुक्तम्=त्यक्तम् । स्रस्तांशुकम्=स्खलितदुकूलम् । मेदिन्याः=भूमेः । नितम्बमिव=कटिपश्चात्प्रदेशमिव । स्थितम्=विराजमानम् । सह्यं=तन्नामकपर्वतम् । अलङ्घयत्=अतिचक्राम ॥ ५१ ॥ ५२ ॥

तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः ॥
रामास्त्रोत्सारितोऽप्यासीत्सह्यलग्न इवार्णवः ॥ ५३ ॥

अपरान्तानाम्=पाश्चात्यानाम् । जये=विजये लाभे इत्यर्थः । उद्यतैः=सन्नद्धैः । विसर्पद्भिः=गच्छद्भिः । तस्य=रघोः । अनीकैः=बलैः । रामस्य=जामदग्न्यस्य परशुरामस्य वा । अस्त्रैः=प्रहरणैः । उत्सारितः=निवारितोऽपि । अर्णवः=समुद्रः । सह्यलग्न इव=सह्यसंसक्त इव । आसीत्=अभूत् ॥ ५३ ॥

भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् ॥
अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः ॥ ५४ ॥

भयेन=भीत्या । उत्सृष्टविभूषाणाम्=विमुक्तालंकाराणाम् । केरलयोषिताम्=केरलनारीणाम् । अलकेषु=केशेषु । तेन=रघुणा । चमूरेणुः=सेनारजः । चूर्णस्य=कुङ्कुमादिरजसः । प्रतिनिधीकृत=प्रतिनिधित्वेन स्थापितः ॥ ५४ ॥

मुरलामारुतोद्धूतमगमत्कैतकं रजः ॥
तद्योधवारबाणानामयत्नपटवासताम् ॥ ५५ ॥

मुरलानाम केरलदेशेषु काचिन्नदी । तस्या मारुतेन=वातेन । उद्धूतम्=उत्थापितम् । कैतकम्=केतकीसम्बन्धि । रजः=धूलिः । तस्य=रघोः ।

ये योधाः=भटाः तेषाम् वा । वार बाणानाम्=कवचानाम् । अयत्नपटवासताम्=अप्रयाससिद्धवस्त्रवानाद्रव्यत्वम् । अगमत्=प्राप ॥ ५५ ॥

अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः ॥
वर्मभिः पवनोद्धूतराजतालीवनध्वनिः ॥ ५६ ॥

चरताम्=गच्छताम् । वाहानाम्=वाजिनाम् । गात्रेषु=अंगेषु । शिञ्जितैः=शब्दायमानैः । वर्मभिः=कवचैः । पवनेन=वायुना । उद्धूतानाम्=कम्पितानाम् । राजतालीवनानाम्=तरुविविष्टारण्यानाम् । ध्वनिः=शब्दः । अभ्यभूयत=तिरस्क्रियते स्म ॥ ५६ ॥

खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु ॥
कटेषु करिणां पेतुः पुंनागेभ्यः शिलीमुखाः ॥ ५७ ॥

शिलीमुखाः=भ्रमराः । पुंनागेभ्यः=नागकेशरेभ्यः ( अगस्त्य ) । खर्जूरीणाम्=खर्जूरसंज्ञकवृक्षाणाम् । स्कन्धेषु=प्रकाण्डेषु । नद्धानाम्=बद्धानाम् । करिणाम्=गजानाम् । मदोद्गारेण=मदस्रावेण । सुगन्धिषु=सामोदेषु । कटेषु=गण्डस्थलेषु । पेतुः=पतितवन्तः ॥ ५७ ॥

अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ ॥
अपरान्तमहीपालव्याजेन रघवे करम् ॥ ५८ ॥

किल=निश्चयेन । उदन्वान्=उदधिः । रामाय=परशुरामाय । अभ्यर्थितः=याचितः सन् । अवकाशम्=स्थानम् । ददौ=अदात् । रघवे=दिलीपसूनवे । अपरान्ते=समीपे निकटे वा । ये महीपालाः=भूपतयः । तेषां व्याजेन=मिषेण । करम्=बलिम् । ददौ=अदात् ॥ ५८ ॥

मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम् ॥
त्रिकूटमेव तत्रोच्चैर्जयस्तम्भं चकार सः ॥ ५९ ॥

तत्र=केरलदेशेषु । सः=रघुः । मत्तानाम्=उन्मदानाम् । इभानाम्=हस्तिनाम् । रदनैः=दन्तैः । उत्कीर्णानि=दन्तक्षतान्येव । व्यक्तानि=

स्फुटानि । विक्रमलक्षणानि=पराक्रमचिन्हानि यस्मिंस्तत् । त्रिकूटमेव=त्रिकूटाचलमेव । उच्चैः=उन्नतम् । जयस्तम्भम्=विजयस्थूणाम् । चकार=विदधे ॥ ५९ ॥

पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना ॥
इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी ॥ ६० ॥

ततः=केरलविजयानन्तरम् । सः=रघुः । संयमी=वशी । तत्त्वज्ञानेन=यथार्थविचारेण । इन्द्रियाख्यान्=चक्षुरादीन् । रिपूनिव=अरीनिव । पारसीकान्=फारसदेशनिवासिनः । जेतुम्=वशीकर्त्तुम् । स्थलवर्त्मना=भूमार्गेण । प्रतस्थे=जगाम ॥ ६० ॥

यवनीमुखपद्मानां सेहे मधुमदं न सः ॥
बालातपमिवाब्जानामकालजलदोदयः ॥ ६१ ॥

सः=रघुः । यवनीनाम्=यवननारीणां तुरुष्कयोषितामित्यर्थः । मुखानि=आननानि एव । पद्मानि=कमलानि । तेषां मधुना=मद्येन । यो मदः=मदरागस्तम् । अकाले=वर्षाव्यतिरिक्ते समये । यो जलदोदयः=वारिदाविर्भावः । अब्जानाम्=पंकजानाम् । बालातपमिव=घर्मइव । न सेहे=नो असहिष्ट ॥ ६१ ॥

सङ्ग्रामस्तुमुलस्तस्य पाश्चात्यैरश्वसाधनैः ॥
शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ॥ ६२ ॥

अश्वसाधनैः=वाजिसैन्यैः । पाश्चात्यैः=पश्चिमदेशोद्भवैर्यवनैस्सह । शार्ङ्गाणाम्=शृङ्गविकाराणां धनुषाम् । कूजितैः=शब्दैः । विज्ञेयाः=बोध्याः । प्रतियोधाः=प्रतिभटाः । यस्मिंस्तस्मिन् । रजसि=वालुकायामित्यर्थः । तस्य=रघोः । तुमुलः=घोरम् । संग्रामः=रणम् । अभूत्=संजातम् ॥ ६२ ॥

भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ॥
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥ ६३ ॥

सः=रघुः । भल्लापवर्जितैः=अस्त्रविशेषच्छिन्नैः । तेषाम्=पश्चिमदेशोत्पन्नतुरुष्काणामित्यर्थः । श्मश्रुलैः=प्रवृद्धमुखरोमवद्भिः । शिरोभिः=उत्तमाङ्गैः । सरघाभिः=मधुमक्षिकाभिः । व्याप्तैः=युक्तैः । क्षौद्रस्य=मधुनः । पटलैः=संघातैरिव । महीम्=भुवम् । तस्तार=आच्छादयामास ॥ ६३ ॥

अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ॥
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ६४ ॥

शेषाः=हतावशिष्टाः । अपनीतशिरस्त्राणाः=अपसारितोष्णीषाः सन्तः । तम्=रघुम् । शरणम्=आश्रयम् । ययुः=प्रापुः । हि=यस्मात् कारणात् । महात्मनाम्=उदारचेतसाम् । संरम्भः=क्रोधः । प्रणिपातः प्रणतिरेव । प्रतीकारः=शान्त्युपायो यस्यैवंभूतो भवति ॥ ६४ ॥

विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम् ॥
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६५ ॥

तस्य=रघोः । योधाः=भटाः । आस्तीर्णानि=विस्तारितानि । आजिनरत्नानि=श्रेष्ठकृष्णमृगचर्माणि यासु तासु । द्राक्षावलयासु=मृद्वीकावेष्टितासु । भूमिषु=भूसु । मधुभिः=मद्यैः । विजयश्रमम्=रणश्रान्तिमित्यर्थः । विनयन्ते स्म=अपनीतवन्तः ॥ ६५ ॥

ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् ॥
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिव ॥ ६६ ॥

ततः=तदनन्तरम् । भास्वान्=सूर्यः इव । उस्रैः=किरणैः । रसान्=जलानीव । सः=रघुः । शरैर्बाणैः । उदीच्यान्=उत्तरदेशोद्भवनृपान् । उद्धरिष्यन्=शोषयिष्यन्=विनाशयिष्यन्नित्यर्थः । कौबेरीम्=उत्तरां दि- । प्रतस्थे=जगाम ॥ ६६ ॥

विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः ॥
दुधुवुर्वाजिनः स्कन्धाँल्लग्नकुङ्कुमकेसरान् ॥ ६७ ॥

सिन्धोः=कस्याश्चिन् नद्याः । तीरे=कूले । विचेष्टनैः=अङ्गसंचालनैः । विनीताध्वश्रमाः=अपनीतमार्गप्रयासाः । तस्य=रघोः । वाजिनः=हयाः । लग्नाः=संसक्ताः । कुङ्कुमकेसराः=कुङ्कुमपुष्पकिञ्जल्का येषु तान् । स्कन्धान्=अङ्गावयवान् । दुधुवुः=कम्पयामासुः ॥ ६७ ॥

तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम् ॥
कपोलपाटलादेशि बभूव रघुचेष्टितम् ॥ ६८ ॥

तत्र=उदीच्यां दिशि । हूणावरोधानाम्=म्लेच्छनारीणाम् । कपोलेषु=गण्डेषु गल्लेषु वा । पाटलस्य=रक्तवर्णस्य । आदेशि=बोधकम् । भर्तृषु=पतिषु । व्यक्तविक्रमम्=स्पष्टपराक्रमम् । रघुचेष्टितम्=रघुकर्म । बभव=अभवत् ॥ ६. ॥

काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः ॥
गजालानपरिक्लिष्टैरक्षोटैः सार्धमानताः ॥ ६९ ॥

काम्बोजाः=काम्बोजराजानः । समरे=युद्धे । तस्य=रघोः । वीर्यम्=प्रभावम् । सोढुम्=सहनं कर्तुम् । अनीश्वराः=असमर्थाः सन्तः । गजानाम्=हस्तिनाम् । आलानम्=बन्धनम् । तेन परिक्लिष्टैः=परिक्षतैः । अक्षोटैः=अखरोटसंज्ञकैः । सार्धम्=सह । आनताः=नम्रा बभूवुः ॥६९॥

तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः ॥
उपदा विविशुः शश्वन्नोत्सेकाः कोसलेश्वरम् ॥ ७० ॥

---

१ 'अक्षोटः' पार्वतीयपीलुवृक्ष इति बोध्यम् ।

तेषाम्=काम्बोजानाम् । सद्भिः=श्रेष्ठैः । अश्वैः=हयैः । भूयिष्ठाः=प्रभूताः । तुंगाः=उन्नताः । द्रविणानाम्=अर्थानाम् । राशयः=निचयाः । उपदाः=उपायनानि । कोसलेश्वरम्=अयधपतिं रघुम् । शश्वत्=अनेकशः । विविशुः=प्रापुः । तथापि, उत्सेकाः=गर्वास्तु । न विविशुः=नो प्रापुः ॥ ७० ॥

ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ॥
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥ ७१ ॥

ततः=काम्बोजविजयानन्तरम् । अश्वसाधनः=हययानः सन् । गौरीगुरुम्=पार्वतीपितरं हिमालयम् । शैलम्=पर्वतम् । उद्धूतैः=अश्वखुरोद्धूतैः । धातूनाम्=गैरकादीनाम् । रेणुभिः=रजोभिः । तत्कूटान्=हिमालय शिखराणि । वर्धयन्निव=एधयन्निव । आरुरोह=आरूढवान् ॥ ७१ ॥

शशंस तुल्यसत्वानां सैन्यघोषेऽप्यसंभ्रमम् ॥
गुहाशयानां सिंहानां परिवृत्यावलोकितम् ॥ ७२ ॥

तुल्यसत्वानाम्=सदृशपराक्रमिणाम् । गुहाशयानाम्=दरीगतानाम् । सिंहानाम्=मृगेन्द्राणाम् । सैन्यघोषेऽपि=सेनाकलकलेऽपि । परिवृत्य=परावृत्य । अवलोकितम्=दर्शितम् । असंभ्रमम्=क्षोभराहित्यम् । शशंस=कथयामास ॥ ७२ ॥

भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः ॥
गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ७३ ॥

भूर्जेषु=भूर्जपत्रेषु । मर्मरीभूताः=मर्मरशब्दं कुर्वन्तः । कीचकानाम्=वेणुविशेषणाम् । ध्वनिहेतवः=शब्दकारणानी । गङ्गायाः=भागीरथ्याः । शीकरिणः=अम्बुकणवन्तः । मरुतः=पवनाः । मार्गे=अध्वनि । तम्=रघुम् । सिषेविरे=सेवितवन्तः ॥ ७३ ॥

विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः ॥
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥ ७४ ॥

सैनिकाः=सेनाभटाः । नमेरूणाम्=सुरपुन्नागानाम् । छायासु=अनातपेषु । निषण्णानाम्=उपविष्टानाम् । मृगाणाम्=कस्तूरीहरिणानाम् । नाभिभिः=उदरावयवैः । वासितोत्सङ्गाः=सामोदतलाः । दृषदः=पाषाणान् । अध्यास्य=उपविश्य । विशश्रमुः=विश्रान्तिं चक्रुः ॥ ७४ ॥

सरलासक्तमातंगग्रैवेयस्फुरितत्विषः ॥
आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः ॥ ७५ ॥

सरलेषु=देवदारुविशेषेषु । आसक्तानि=निबद्धानि । यानि मातंगानाम्=करिणाम् । ग्रैवेयाणि=कण्ठशृङ्खलानि । तेषु स्फुरतत्विषः=प्रदीप्तरुचयः । ओषधयः=प्रदीप्तलताः । नक्तम्=निशायाम् । नेतुः=स्वामिनो रघोः । अस्नेहदीपिकाः=अतैलप्रदीपाः । आसन्=अभूवन् ॥ ७५ ॥

तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः ॥
गजवर्ष्म किरातेभ्यः शशंसुर्देवदारवः ॥ ७६ ॥

तस्य=रघोः । उत्सृष्टेषु=परित्यक्तेषु । निवासेषु=सेनानिवेशेषु । कण्ठरज्जुभिः=गजग्रैवैः । क्षताः=भिन्नाः । त्वचः=चर्म येषां ते । देवदारवः=तरुविशेषाः । किरातेभ्यः=वनचरेभ्यः । गजानाम्=करिणाम् । वर्ष्म=प्रमाणम् । शशंसुः=कथयामासुः ॥ ७६ ॥

तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत् ॥
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ ७७ ॥

तत्र=हिमालये । रघोः=दिलीपात्मजस्य । पर्वतीयैः=गिरिजैः । गणैः=उत्सवसंकेताभिधैः सह । नाराचानाम्=बाणानाम् । क्षेपणी-

यानाम्=भिंदिपालानाम् । अश्मनां च=प्रस्तराणां च । निष्पेषेण=परस्परसंघर्षेण । उत्पतिताः=उद्गताः । अनलाः=अग्नयो यस्मिन् तथोक्तम् । घोरम्=भयानकम् । जन्यम्=समरम् । अभूत्=संजातम् ॥ ७७ ॥

शरैरुत्सवसंकेतान् स कृत्वा विरतोत्सवान् ॥
जयोदाहरणं बाह्वोर्गापयामास किन्नरान् ॥ ७८ ॥

सः=रघुः । शरैः=बाणैः । उत्सवसङ्केतान्=तदभिधान्गणान् । विरतोत्सवान्=विगतमङ्गलान् । कृत्वा=विधाय । बाह्वोः=निजभुजयोः । किन्नरान्=देवयोनीन् । जयोदाहरणम्=विजयकथामित्यर्थः । गापयामास=गापितवान् ॥ ७८ ॥

परस्परेण विज्ञातस्तेषूपायनपाणिषु ॥
राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा ॥ ७९ ॥

तेषु=उत्सवसङ्केतेषु । उपायनपाणिषु=उपदाहस्तेषु सत्सु । परस्परेण=मिथः । राज्ञा=रघुणा । हिमवतः=हिमालयस्य । सारः=ऐश्वर्यरूपः । विज्ञातः=बुद्धः । हिमाद्रिणा च=हिमवतापि । राज्ञः=भूपस्य रघोः । सारः=बलरूपः । विज्ञातः=विदितः ॥ ७९ ॥

तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः ॥
पौलस्त्यतुलितस्याद्रेरादधान इव ह्रियम् ॥ ८० ॥

सः=रघुः । तत्र=हिमालये । अक्षोभ्यम्=अतिरस्करणीयम् । यशोराशिम्=कीर्तिसमूहम् । निवेश्य=संस्थाप्य । पौलस्त्येन=रावणेन । तुलितस्य=कम्पितस्य । अद्रेः=कैलासपर्वतस्य । ह्रियम्=लज्जाम् । आदधान इव=जनयन्निव । अवरुरोह=अवततार ॥ ८० ॥

चकम्पे तीर्णलौहित्ये तस्मिन् प्राग्ज्योतिषेश्वरः ॥
तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः ॥ ८१ ॥

सास्मिन्=रघौ । तीर्णा=उत्तीर्णाप्राप्तपरमदेशेतिभावः । लौहित्या=नामकाचिन्नदी येन तस्मिन् । प्राग्ज्योतिषाणाम्=केषांचिद् जनपदाविशेषाणाम् । ईश्वरः=स्वामी । तस्य=रघोः । गजानाम्=करिणाम् । आलानताम्=बन्धनस्तम्भताम् । प्राप्तैः=गतैः । कालागुरुद्रुमैः=कृष्णागुरुतरुभिः । सह=साकम् । चकम्पे=कम्पितवान् ॥ ८१ ॥

न प्रसेहे स रुद्धार्कमधारावर्षदुर्दिनम् ॥
रथवर्त्मरजोऽप्यस्य कुत एव पताकिनीम् ॥ ८२ ॥

सः=प्राग्ज्योतिषेश्वरः । रुद्धार्कम्=आच्छादितसूर्यम् । अधारावर्षञ्च=वृष्टिरहितं च । तद्दुर्दिनं च=दुर्दिवसञ्च "मेघच्छन्नेऽह्नि दुर्दिनम्" इत्यमरः । अस्य=रघोः । रथवर्त्मरजोऽपि=स्यन्दनमार्गपांशुमपि । न प्रसेहे=नो सोढवान् । पताकिनीम्=सेनां तु । कुत एव=सोढवान् न कुतोऽपीत्यर्थः ॥८२॥

तमीशः कामरूपाणामत्याखण्डलविक्रमम् ॥
भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥ ८३ ॥

कामरूपाणाम्=तदाख्यदेशविशेषाणाम् । ईशः=स्वामी । भिन्नाः=स्रवन्मदाः । कटाः=गण्डाः येषां तैः । यैर्नागैः=करिभिः । अन्यान्=अपरान् भूपान् । उपरुरोध=निराचकार । तैः=नागैः । अत्याखण्डलविक्रमम्=अतिक्रान्तेन्द्रपराक्रमम् । तम्=रघुम् । भेजे=नागान् दत्त्वा शरणं प्राप ॥ ८३ ॥

कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम् ॥
रत्नपुष्पोपहारेण छायामानर्च पादयोः ॥ ८४ ॥

कामरूपेश्वरः=कामरूपाधिपतिः । हेमपीठस्य=सुवर्णासनस्य । अधिदेवताम्=अधिष्ठातृदेवताम् । तस्य=रघोः । पादयोः=चरणयोः । छायाम्=कान्तिम् । रत्नान्येव=मरकतमण्यादीन्येव । पुष्पाणि=कुसुमानि । तेषामुपहारेण=उपायनेन निवेदनेन वा । आनर्च=पूजयामास ॥ ८४ ॥

इति जित्वा दिशो जिष्णुर्न्यवर्तत रथोद्धतम् ॥
रजो विश्रामयन् राज्ञां छत्रशून्येषु मौलिषु ॥ ८५ ॥

जिष्णुः=विजयी रघुः । इति=इत्थम् । दिशः=काष्ठाः । जित्वा=तत्रोद्भवान् नृपान् स्वायत्तीकृत्वेत्यर्थः । रथैः=स्यन्दनैः । उद्धतम्=उत्थापितम् । रजः=धूलिम् । राज्ञाम्=महीपानाम् । छत्रशून्येषु=अनातपत्रेषु । मौलिषु=किरीटेषु चूडासु वाः । विश्रामयन्=स्थापयन् । न्यवर्त्तत=निवृत्तोऽभूत् ॥ ८५ ॥

स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम् ॥
आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ८६ ॥

सः=रघुः । सर्वस्वम्=समग्रम् सकलवित्तमितिभावः । दक्षिणा=देयं यस्य तम् । विश्वजितम्=विश्वजितनामकम् । यज्ञम्=सत्रम् । आजह्रे=चकार । हि=यस्मत् कारणात् । सताम्=महात्मनाम् । वारिमुचाम=घनानामिव । आदानम्=ग्रहणम् अर्जनं वा । विसर्गाय=त्यागाय दानायेत्यर्थः । भवति ॥ ८६ ॥

सत्रान्ते सचिवसखः पुरस्क्रियाभि-
र्गुर्वीभिः शमितपराजयव्यलीकान् ॥
काकुत्स्थश्चिरविरहोत्सुकावरोधान्
राजन्यान् स्वपुरनिवृत्तयेऽनुमेने ॥ ८७ ॥

सचिवसखः=मन्त्रिसहायः । काकुत्स्थः=रघुः । सत्रान्ते=यज्ञान्ते । गुर्वीभिः=महतीभिः । पुरस्क्रियाभिः=सत्कारार्चाभिः । शमितम्=दुरीकृतम् । पराजयेन=संग्रामतिरस्कारेण । व्यलीकम्=दुःखं येषां तान् । चिरविरहेण=अनल्पावियोगेन । उत्सुकाः=सोत्कंठाः । अवरोधाः=अन्तःपुराङ्गनाः येषां तान् । राजन्यान्=क्षत्रियान् । स्वपुरनिवृत्तये=निजदेशगमनाय । अनुमेने=अनुज्ञातवान् ॥ ८७ ॥

ते रेखाध्वजकुलिशातपत्रचिह्नम् सम्राजश्चरणयुगं प्रसादलभ्यम् ॥ प्रस्थानप्रणतिभिरङ्गुलीषु चक्रुः मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥ ८८ ॥

ते=नृपाः । रेखाः=रूपाणि अभोगा वा । ध्वजाः=पताकाः । कुलिशानि=वज्राणि । आतपत्राणि=छत्राणि च । चिह्नानि=लक्षणाणि यस्य तथोक्तम् । प्रसादेन=प्रसन्नतया । लभ्यम्=प्राप्यम् । सम्राजः=सर्वभूमेरधीश्वरस्य रघोः । चरणयुगम्=पादद्वयम् । प्रस्थाने=प्रयाणकाले । याः प्रणतयः=नमस्क्रियाः । ताभिः=करणैः । अङ्गुलीषु=चरणावयवरूपासु । मौलिषु=किरीटेषु । याः स्रजः=माल्यानि । ताभ्यश्च्युतः=पतितः । यो मकरन्दः=पुष्परसस्तस्य । रेणुभिः=परागैः । गौरम्=श्वेतवर्णम् । चक्रुः=विदधुः ॥ ८८ ॥

इति श्रीव्रजरत्नभट्टाचार्यकृतौ रघुवंशविवृतौ
चतुर्थः सर्गः समाप्तः ।

---

## ॥ अथ पञ्चमः सर्गः ॥

तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोशजातम् ॥ उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ १ ॥

विश्वजिति=विश्वजिन्नामके । अध्वरे=क्रतौ । निःशेषम्=अखिलम् । विश्राणितम्=प्रदत्तम् । कोशानाम्=अर्थराशीनां निधीनामित्यर्थः । जातम्=समूहो धनानामिति यावत् येन तम् । क्षितीशम्=राजानम् । तम्=रघुम् । उपात्तविद्यः=अधिगतवेदादिविद्यः । वरतन्तोः=तस्य चिटेः । शिष्यः=छात्रः । गुरोः=शिक्षकस्य । दक्षिणार्थी=देयाभिलाषी । कौत्सः=कौत्साभिध ऋषिः । प्रपेदे=प्राप ॥ १ ॥

स मृण्मये वीतहिरण्मयत्वात्पात्रे निधायार्घ्यमनर्घ-
शीलः ॥ श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्ज-
गामातिथिमातिथेयः ॥ २ ॥

अनर्घशीलः=अमूल्यस्वभावः उदारचेता इत्यर्थः । यशसा=कीर्त्या । प्रकाशः=प्रदीप्तः । आतिथेयः=अतिथिषु साधुः अभ्यागतपूजक इत्यर्थः । सः=रघुः । वीतहिरण्मयत्वात्=अपगतहेमपात्रत्वात् । मृण्मये=मृत्तिकानिर्मिते । पात्रे=आधारे । अर्घ्यम्=पूजोपकरणम् । निधाय=संस्थाप्य । श्रुतेन=शास्त्रेण । प्रकाशम्=विश्रुतं तेजोयुक्तमिति यावत् । अतिथिम्=आगन्तुकं कौत्समित्यर्थः । प्रत्युज्जगाम=प्रत्युद्ययौ ॥ २ ॥

तमर्चयित्वा विधिवद्विधिज्ञस्तपोधनं मानधना-
ग्रयायी ॥ विशांपतिर्विष्टरभाजमारात्कृताञ्जलिः
कृत्यविदित्युवाच ॥ ३ ॥

विधिज्ञः=धर्मशास्त्रोपदेशवित् । मानधनानाम्=यशस्विनाम् । अग्रयायी=पुरोगः । कृत्यवित्=कर्त्तव्यज्ञः । विशाम्पतिः=नृपः । विष्टरभाजम्=कृतासनपरिग्रहम् । तम्=पूर्वोक्तम् । तपोधनम्=तापसम् कौत्सम् । विधिवत्=यथोचितमित्यर्थः । अर्चयित्वा=संपूज्य । आरात्=समीपे । कृताञ्जलिः=संयोजितकरयुगलः सन् । इति=वक्ष्यमाणप्रकारेण । उवाच=बभाषे ॥ ३ ॥

अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे ! कुशली
गुरुस्ते ॥ यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैत-
न्यमिवोष्णरश्मेः ॥ ४ ॥

हे कुशाग्रबुद्धे !=हे तीव्रमेधाविन् ! । मन्त्रकृताम्=मन्त्रज्ञानाम् । ऋषीणाम्=मुनीनाम् । अग्रणीः=पुरोगः प्रथम इत्यर्थः । ते=तव । गुरुः=शिक्षकः । अपि=कच्चित् । कुशली ?=क्षेमयुक्तः अस्ति । यतः=यस्मात् । गुरोः=

सकाशात् । त्वया=भवता कौत्सेन । अशेषम्=सकलम् । ज्ञानम्=बोधः । लोकेन=जगता । उष्णरश्मेः=सूर्यस्य सकाशात् । चैतन्यम्=प्रबोध इव । आप्तम्=लब्धम् ॥ ४ ॥

कायेन वाचा मनसापि शश्वद्यत्संभृतं वासवधैर्य-
लोपि ॥ आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्-
षेस्त्रिविधं तपस्तत् ॥ ५ ॥

कायेन=देहेन अनशनादिना नियमधारणेनेत्यर्थः । वाचा=लोकवेदाद्यध्ययनेन । मनसा=गायत्र्यादिमन्त्रजपेन । वासवस्य=सुरेन्द्रस्य । धैर्यलोपि=मनःस्थैर्यनाशकम् । यत्=तपः । शश्वद्=निरन्तरम् । संभृतम्=सञ्चितम् । तत्=पूर्वोक्तम् । महर्षेः=तव गुरोः । त्रिविधम्=वाङ्मनःकायजम् । तपः=विध्यनुष्ठानम् कायेन्द्रियमनसां समाधानस्वरूपम् । अन्तरायैः=विघ्नैः । व्ययम्=नाशम् । कच्चित् ?=किम् ? ॥ नापाद्यते=नो विनाश्यते॥५॥

आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुत निर्वि-
शेषम् ॥ कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदा-
माश्रमपादपानाम् ॥ ६ ॥

आधारबन्धप्रमुखैः=आलवालरचनादिभिः । प्रयत्नैः=उपायैः । सुतनिर्विशेषम्=तनयसदृशं यथा तथा । संवर्धितानाम्=वृद्धीं प्रापितानां पालितानामित्यर्थः । श्रमच्छिदाम्=प्रयासनाशकानां । वः=युष्माकम् । आश्रमपादपानाम्=तपोवनवृक्षाणाम् । कच्चित् ?=किम् ? वाय्वादिः=महावातदावानलादिः । उपप्लवः=उल्कापाताद्युपद्रवः न=नो अस्ति ॥६॥

क्रियानिमित्तेष्वपि वत्सलत्वादभग्नकामा मुनिभिः
कुशेषु ॥ तदङ्कशय्याच्युतनाभिनाला कच्चिन्मृगी-
णामनघा प्रसूतिः ॥ ७ ॥

मुनिभिः=तपस्विभिः । वत्सलत्वात्=दयालुत्वात् । क्रियानिमित्तेष्वपि=अनुष्ठानसाधनेष्वपि । कुशेषु=दर्भेषु । अभग्नकामा=अप्रासिद्धमनोरथा । तेषाम्=मुनीनाम् । अंका एव=उत्सङ्गा एव । शय्याः=तल्पानि तासु । च्युतानि=पतितानि । नाभिनालानि=शरीरावयवानि यस्याः सा । मृगीणाम्=हरिणीनाम् । प्रसूतिः=सन्ततिः । कच्चित् ?=किम् । अनघा=दुःखहीना ( अस्ति ) ॥ ७ ॥

निर्वर्त्यते यैर्नियमाभिषेको येभ्यो निवापाञ्जलयः पितॄणाम् ॥ तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित् ? ॥ ८ ॥

यैः=तीर्थवारिभिः । नियामाभिषेकः=नित्यस्नानपानादिकम् । निर्वर्त्यते=संपाद्यते । येभ्यः=वारिभ्यः । पितॄणाम्=परलोकगतानाम् । निवापाञ्जलयः=तर्पणाञ्जलयः । निष्पाद्यन्ते । उञ्छानाम्=शिलधान्यानाम् । षष्ठैः=षष्ठांशैः । अङ्कितानि=व्याप्तानि । सैकतानि=सैकतं सिकतामयमित्यमरः पुलिनानि येषां तानि । वः=युष्माकम् । तानि पूर्वोक्तानि । जलानि=तीर्थवारीणि । कच्चित् ?=किम् । शिवानि=भद्राणि तु कल्याणकारीणीत्यर्थः सन्ति ? ॥ ८ ॥

नीवारपाकादि कडङ्गरीयैरामृश्यते जानपदैर्न कच्चित् ? ॥ कालोपपन्नातिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वः ॥ ९ ॥

कालेषु=योग्यसमयेषु सत्कारसमयेष्वित्यर्थः । उपपन्नानाम्=समागतानाम् । अतिथीनाम्=अभ्यागतानाम् । कल्प्याः=विधेयाः । भागाः=अंशाः यस्मिन् तत् । वन्यम्=आरण्यकम् । वः=युष्माकम् । शरीरस्थितेः=देहधारणस्य । साधनम्=कारणम् । नीवारपाकादि=धान्यविशेषसम्पदि । जानपदैः=जनपदेभ्यः आगतैः । कडङ्गरीयैः=पशुभिः तु । कच्चित् ?=किम् ? । नामृश्यते=नो भक्ष्यते ? ॥ ९ ॥

अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयानु-
मतो गृहाय ॥ कालो ह्ययं संक्रमितुं द्वितीयं सर्वो-
पकारक्षममाश्रमं ते ॥ १० ॥

अपि=किञ्च । त्वम्=भवान् । प्रसन्नेन=प्रहृष्टेन । महर्षिणा=वरतन्तुनाम्ना तव गुरुणा । सम्यक्=यथाविधि । विनीय=विद्यामुपदिश्य । गृहाय=गृहं गन्तुं गृहस्थाश्रममनुभवितुमित्यर्थः । अनुमतः=दत्ताज्ञः । किम्? हि=यतः । ते=तव । सर्वेषाम्=ब्रह्मचर्याद्याश्रमाणाम् । उपकारे=रक्षणे । क्षमम्=शक्तम् । द्वितीयम्=ब्रह्मचर्यादितरम् । आश्रमम्=गार्हस्थ्यमिति-भावः । संक्रमितुम्=गन्तुम् । अयम्=एषः । कालः=समयोऽस्ति ॥१०॥

तवार्हतो नाभिगमेन तृप्तं मनो नियोगक्रिययो-
त्सुकं मे ॥ अप्याज्ञया शासितुरात्मना वा प्रा-
प्तोऽसि संभावयितुं वनान्माम् ॥ ११ ॥

अर्हतः=पूजार्हस्य । तव=भवतः । अभिगमेन=आगमनेनैव । मे=मम । नियोगक्रियया=आज्ञाविधानेन । उत्सुकम्=सोत्कं । मनः=चेतः । न तृप्तम्=न सन्तुष्टम् । शासितुः=गुरोः । आज्ञया=वचनेन । वा=उताहो । आत्मना=स्वयमेव वा । माम्=रघुम् । सम्भावयितुम्=सम्मानयितुम् । वनात्=काननात् । प्राप्तोऽसि=समागतोऽसि ॥ ११ ॥

इत्यर्घ्यपात्रानुमितव्ययस्य रघोरुदारामपि गां नि-
शम्य ॥ स्वार्थोपपत्तिं प्रति दुर्बलाशस्तमित्यवोचद्व-
रतन्तुशिष्यः ॥ १२ ॥

अर्घ्यपात्रेण=पूजोपचारपात्रेण मृण्मयेनेत्यर्थः । अनुमितः=ज्ञातबुद्धः । व्ययः=सर्वस्वत्यागो यस्य तस्य रघोः । इति=पूर्वोक्तप्रकाराम् । उदाराम्=असाधारणा मनल्पप्रभावामिति यावत् । गाम्=गिरम् । निशम्य=श्रुत्वा । स्वार्थोपपत्तिम्=स्वामीष्टलाभं प्रति । दुर्बलाशः=कृषाभिलाषः

निराशः सन् । वरतन्तुशिष्यः=कौत्सः । इति=वक्ष्यमाणप्रकारेण । तम्=रघुम् । अवोचत्=अगदत् ॥ १२ ॥

सर्वत्र नो वार्त्तमवेहि राजन् ! नाथे कुतस्त्वय्य-
शुभं प्रजानाम् ॥ सूर्ये तपत्यावरणाय दृष्टेः कल्पेत
लोकस्य कथं तमिस्रा ॥ १३ ॥

हे राजन् ! =भो नृप ! त्वम्=भवान् । नः=अस्माकम् । सर्वत्र=अखिलवस्तुषु । वार्त्तम्=कुशलम् । अवेहि=जानीहि । त्वयि=भवति । नाथे=स्वामिनि सति । प्रजानाम्=लोकानाम् । अशुभम्=अमंगलम् । कुतः=कुत्र कथं भवेदित्यर्थः । सूर्ये=प्रभाकरे । तपति=प्रकाशमाने सति । तमिस्रा=तिमिरं । लोकस्य=संसारस्य । दृष्टेः=चक्षुर्व्यापारस्य । आवरणाय=आच्छादनाय । कथम् ?=केन प्रकारेण । कल्पेत=सम्पद्येत न कथमपीत्यर्थः ॥ १३ ॥

भक्तिः प्रतीक्ष्येषु कुलोचिता ते पूर्वान्महाभाग त-
यातिशेषे ॥ व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थि-
भावादिति मे विषादः ॥ १४ ॥

प्रतीक्ष्येषु=पूज्येषु । ते=तव । भक्तिः=श्रद्धातिशयः । कुलोचिता=स्ववंशयोग्या । हेमहाभाग !=हे ऐश्वर्यशालिन् ! तया=भक्त्या । पूर्वान्=पूर्वपुरुषान् । अतिशेषे=अतिक्रामसि । किन्तु व्यतीतकालः=अतिक्रान्तसमयः । अहम्=कौत्सः । अर्थिभावात्=याचकत्वेन । त्वाम्=भवन्तम् । अभ्युपेतः=समागतः । इति=एतावानेव । मे=मम । विषादः=खेदोऽस्ति ॥ १४ ॥

शरीरमात्रेण नरेन्द्र ! तिष्ठन्नाभासि तीर्थप्रतिपादि-
तर्द्धिः ॥ आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नी-
वार इवावशिष्टः ॥ १५ ॥

हे नरेन्द्र !=अहो प्रजेश्वर ! । तीर्थेषु=योग्येषु । प्रतिपादिता=विश्राणितं । ऋद्धिः=ऐश्वर्यं येन स तथोक्तः । शरीरमात्रेण=देहमात्रेणैव । तिष्ठन्=वर्त्तमानः सन् त्वम् । आरण्यकैः=वनवासिभिः । उपात्ता=गृहीता । फलप्रसूतिः=फलसम्पतिर्यस्य तथोक्तः । स्तम्बेन=प्रकाण्डेन । अवशिष्टः=शेषः । नीवार इव=मुनिधान्यमिव । आभासि=शोभसे ॥ १५ ॥

स्थाने भवानेकनराधिपः सन्नाकिञ्चनत्वं मखजं व्यनक्ति ॥ पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ १६ ॥

भवान्=त्वम् । एकनराधिपः सन्=अखिल भूपतिमण्डलेश्वरःसन् । मखजम्=अध्वरजनितम् । अकिञ्चनत्वम्=निर्धनत्वम् । व्यनक्ति=प्रकाशयसि । स्थाने=योग्यमेतत् । हि=यतः । सुरैः=देवैः । पर्यायेण=क्रमेण । पीतस्य=आस्वादितस्य । हिमांशोः=चन्द्रमसः । कलाक्षयः=कलाह्रासः । वृद्धेः=उपचयात् । श्लाघ्यतरः=प्रशंसनीयः ॥ १६ ॥

तदन्यतस्तावदनन्यकार्यो गुर्वर्थमाहर्तुमहं यतिष्ये ॥ स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि ॥ १७ ॥

तत्=तस्मात् कारणात् । तावत्=गुर्वर्थसिद्धेः प्राक् । अनन्यकार्यः=कर्त्तव्यान्तरपराङ्मुखः विधेयान्तररहित इत्यर्थः । अहम्=कौत्सः । गुर्वर्थम्=शिक्षककृते धनम् । अन्यतः=भूपान्तरात् । आहर्त्तुम्=नेतुम् । यतिष्ये=सयत्नी भविष्यामि । ते=तुभ्यम् । स्वस्ति=कल्याणम् । अस्तु=भवतु । चातकोऽपि=पक्षिविशिष्टोऽपि । निर्गलिताम्बुगर्भम्=निर्जलम् । शरद्घनम्=शरन्मेघम् । नार्दति=नो याचते ॥ १७ ॥

एतावदुक्त्वा प्रतियातुकामं शिष्यं महर्षेर्नृपति-

निषिध्य ॥ किं वस्तु विद्वन् ! गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुङ्क्त ॥ १८ ॥

एतावत्=इयन्मात्रं वचनम् । उक्त्वा=कथयित्वा । प्रतियातुकामम्=प्रतिगन्तु मनसम् । महर्षेः=वरतन्तोः । शिष्यम्=कौत्सम् । नृपतिः=रघुः । निषिध्य=निवार्य । हे विद्वन् !=हे शास्त्रज्ञ ! । त्वया=भवता । गुरवे=अध्यापकाय । किं वस्तु कियत् परिमितं किमात्मकं वा द्रव्यं । प्रदेयम्=दातव्यम् । इति=एवं प्रकारेण । तम्=कौत्सम् । अन्वयुङ्क्त=पप्रच्छ ॥ १८ ॥

ततो यथावद्विहिताध्वराय तस्मै स्मयावेशविवर्जिताय ॥ वर्णाश्रमाणां गुरवे स वर्णी विचक्षणः प्रस्तुतमाचचक्षे ॥ १९ ॥

ततः=तदनन्तरम् । यथावत्=यथाविधि । विहिताध्वराय=कृतमखाय । वर्णानाम्=ब्राह्मणादिचतुर्वर्णानाम् । आश्रमाणाम्=ब्रह्मचर्यादीनाम् । गुरवे=शिक्षकाय । स्मयावेशविवर्जिताय=रागद्वेषरहिताय । तस्मै=रघवे । विचक्षणः=चतुरः । वर्णी=ब्रह्मचारी । सः=कौत्सः । प्रस्तुतम्=प्रकृतमर्थम् वक्ष्यमाणं वा वाक्यम् । आचचक्षे=जगाद ॥ १९ ॥

समाप्तविद्येन मया महर्षिर्विज्ञापितोऽभूद्गुरुदक्षिणायै ॥ स मे चिरायास्खलितोपचारां तां भक्तिमेवागणयत्पुरस्तात् ॥ २० ॥

समाप्तविद्येन=अधीतशास्त्रेण ग्रहीताखिलविद्येन वा । मया=कौत्सेन । महर्षिः=शिक्षको वरतन्तुः । गुरुदक्षिणायै=गुरुदक्षिणास्वीकारार्थम् शिक्षापरिक्रयद्रव्यग्रहणाय । विज्ञापितः=प्रार्थितः । अभूत्=आसीत् । सः=गुरुः । मे=मम । चिराय=अध्ययनारम्भकालमारभ्याध्ययनस्यासमाप्तेः । अस्खलितोपचाराम्=यथोक्तोपस्करसहिताम् । ताम्=दुःसाध्याम् । भक्तिमेव=श्रद्धामेव । पुरस्तात्=प्रथमम् । अगणयत्=संख्यातवान् ॥ २० ॥

निर्बन्धसञ्जातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाह-मुक्तः ॥ वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति ॥ २१ ॥

निर्बन्धनेन=प्रार्थनाधिकतया । संजातरुषा=प्राप्तमन्युना । गुरुणा शिक्षकेन=वरतन्तुना । अर्थकार्श्यम्=धनदौर्बल्यं दारिद्रमित्यर्थः । अचिन्तयित्वा=अविमृश्य । अहम् उक्तः=कथितः । वित्तस्य=धनस्य । चतस्रो दश कोटीः=चतुर्दशकोटीः । मे=मह्यम् । विद्यापरिसङ्ख्यया=विद्यागणनानुसारेणैव । आहरेति=आनयेति देहीतिभावः ॥ २१ ॥

सोऽहं सपर्याविधिभाजनेन मत्वा भवन्तं प्रभुशब्दशेषम् ॥ अभ्युत्सहे संप्रति नोपरोद्धुमल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥ २२ ॥

सोऽहम्=धनार्थी । सपर्याविधिभाजनेन=अर्घ्यपात्रेण । भवन्तम्=त्वाम् । प्रभुशब्द एव=स्वामिशब्द एव । शेषः=अवशिष्टो यस्य तथोक्तम् । मत्वा=ज्ञात्वा । श्रुतनिष्क्रयस्य=विद्यामूल्यस्य । अल्पेतरत्वात्=आधिक्यात् । सम्प्रति=अधुना । उपरोद्धुम्=निर्बन्धुम् । नाभ्युत्सहे=नेच्छामि ॥ २२ ॥

इत्थं द्विजेन द्विजराजकान्तिरावेदितो वेदविदां वरेण ॥ एनोनिवृत्तेन्द्रियवृत्तिरेनं जगाद भूयो जगदेकनाथः ॥ २३ ॥

इत्थम्=अनेन प्रकारेण । द्विजराजकान्तिः=चन्द्रद्युतिः । एनसः=अघात् । निवृत्ता=निर्गता । इन्द्रियवृत्तिः=कर्णव्यापारो यस्य तथोक्तः । वेदविदाम्=विदुषाम् । वरेण=श्रेष्ठेन । द्विजेन=कौत्सेन । आवेदितः=निवेदितः । जगदेकनाथः=एकपार्थिवो रघुः । एनम्=कौत्सम् । भूयः=पुनः । दगाद=उवाच ॥ २३ ॥

गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् ॥ गतो वदान्यान्तरमित्ययं मे मा भूत्परीवादनवावतारः ॥ २४ ॥

श्रुतस्य=शास्त्रस्य । पारदृश्वा=पारगामी । अर्थी=प्रार्थयिता । गुर्वर्थम्=शिक्षकदक्षिणाद्रव्यम् । यथा तथा । रघोः । सकाशात्=अन्तिकात् । कामम्=यथेष्टम् । अनवाप्य=अलब्ध्वा । वदान्यान्तरम्=अन्यं दातारम् । गतः=प्राप्तः अप्राप्तमनोरथत्वादित्यर्थः । इत्येवं रूपः । अयम्=एषः । परिवादस्य=निन्दायाः । नवः=नूतनः । अवतारः=आविर्भावः । मे=मम । माभूत्=माङि लुङितिलुङ् नोअस्तु ॥ २४ ॥

स त्वं प्रशस्ते महिते मदीये वसंश्चतुर्थोऽग्निरिवाग्न्यगारे । द्वित्राण्यहान्यर्हसि सोढुमर्हन् ! यावद्यते साधयितुं त्वदर्थम् ॥ २५ ॥

स त्वम्=गुर्वर्थमर्थी । महिते=पूजिते । प्रशस्ते=प्रसिद्धे । श्रेष्ठे वा मदीये=मम संबन्धिनी । अग्न्यागारे=त्रेताग्निशालायाम् । चतुर्थः तुर्यः । अग्निरिव=वह्निरिव । वसन्=तिष्ठन् सन् । द्वित्राणि=द्वे त्रीणि वा । अहानि=दिनानि । सोढुम्=अत्रास्थातुम् । अर्हसि=योग्योऽसि । हे अर्हन् !=हे मान्य ! । त्वदर्थम्=तव प्रयोजनम् । साधयितुम्=सम्पादयितुम् । यावद्यते=यदापर्यन्तं यतिष्ये । यावदहं ते कार्यसाधनार्थं यत्नं करोमि तावत्त्वयात्र स्थातव्यमिति भावः ॥ २५ ॥

तथेति तस्यावितथं प्रतीतः प्रत्यग्रहीत्संगरमग्रजन्मा ॥ गामात्तसारां रघुरप्यवेक्ष्य निष्क्रष्टुमर्थं चकमे कुबेरात् ॥ २६ ॥

अग्रजन्मा=ब्राह्मणः कौत्सः । प्रतीतः=विश्वस्तः प्रसन्नः सन् वा । तस्य=रघोः । अवितथम्=सफलम् । संगरम्=प्रतिज्ञाम् । तथेति=तथाऽस्त्विति ।

प्रत्यग्रहीत्=स्वीचकार । रघुरपि=दिलीपसूनुरपि । गाम्=भूमिम् । आत्त-सारम्=गृहीतार्थाम् । अवेक्ष्य=अवलोक्य । कुबेरात्=धनाधिपात् । अर्थम्=धनम् । निष्क्रष्टुम्=आहर्त्तुम् । चकमे=इयेष ॥ २६ ॥

वसिष्ठमन्त्रोक्षणजात्प्रभावादुदन्वदाकाशमहीधरेषु॥
मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने नही
तद्रथस्य ॥ २७ ॥

वसिष्ठस्य=तदाख्यऋषेः । मन्त्रेणोक्षणेन=अभिमन्त्र्य प्रोक्षणेन । जातप्रादुर्भूतो यः प्रभावः सामर्थ्यम् तस्मात् । उदन्वदाकाशमहीधरेषु=सागराकाशगिरिषु । मरुत्सखस्य=पवनमित्रस्याग्नेः । बलाहकस्य=वारीणां वाहकस्येव । तद्रथस्य=रघोः स्यन्दनस्य । गतिः=संचारः । नहि=नो । विजघ्ने=विहता हि सर्वत्रैव तद्रथस्य गतिरभूत् ॥ २७ ॥

अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम् ॥ सामन्तसंभावनयैव धीरः कैलासनाथं तरसा जिगीषुः ॥ २८ ॥

अथ=अनन्तरम् । प्रदोषे=रजनीमुखे संध्यायामित्यर्थः । प्रयतः=जितेन्द्रियः कृतनियमो वा । धीरः=धैर्यावलम्बी स्थिरचेता वा रघुः । सामन्तः=सामन्ताद् भवः राष्ट्रसत्ता मौलो वा तस्याः ( तस्य ) । सम्भावनया=सम्भावनेन । एव=हि । कैलासनाथम्=कुबेरम् । तरसा=बलेन । जिगीषुः=जेतुमिच्छुः सन् । कल्पितम्=सज्जीकृतम् । शस्त्रम्=आयुधम् । गर्भे=अभ्यन्तरे यस्य तम् । रथम्=स्यन्दनम् । अधिशिश्ये=अधिशयितवान् सुष्वाप ॥ २८ ॥

प्रातः प्रयाणाभिमुखाय तस्मै सविस्मयाः कोशगृहे नियुक्ताः ॥ हिरण्मयीं कोशगृहस्य मध्ये वृष्टिं शशंसुः पतितां नभस्तः ॥ २९ ॥

प्रातः=उषसि । प्रयाणाभिमुखाय=गमनोद्यताय । तस्मै=रघवे । कोशगृहे=धनागारे । नियुक्ताः=अधिकृता अधिकारिणः । सविस्मयाः= साश्चर्य्याः सन्तः । कोशगृहस्य=धनागारस्य । मध्ये—अन्तरे । नभस्तः— आकाशात् । पतिताम्=समागताम् । हिरण्मयीम्=सुवर्णमयम् । वृष्टिम्= वर्षणम् । शशंसुः=ऊचुः ॥ २९ ॥

तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमा-
नात् ॥ दिदेश कौत्साय समस्तमेव पादं सुमे-
रोरिव वज्रभिन्नम् ॥ ३० ॥

भूपतिः=भूपालो रघुः । अभियास्यमानात्=अभिगमिष्यमाणात् । कुबेरात्=धनदात् । लब्धम्=प्राप्तम् । वज्रेण=कुलिशेन । भिन्नम्=खंडितम्। सुमेरोः=हिमाद्रेः । पादम्=प्रत्यन्तपर्वतमिव । तम्=अमुम् । भासुरस्य= समुज्ज्वलस्य । हेम्नः=सुवर्णस्य । राशिम्=समूहम् । समस्तम्=संपूर्णम । कौत्साय=वरतन्तुशिष्याय । दिदेश=ददौ ॥ ३० ॥

जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्य-
सत्त्वौ ॥ गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिका-
मादधिकप्रदश्च ॥ ३१ ॥

गुरुप्रदेयात्=आचार्यदानीयात् । अधिके=अतिरिक्तद्रव्ये । निःस्पृहः= निरुत्सुकः=कौत्सः । अर्थिकामात्=याचकमनोरथात् । अधिकप्रदः= भूरिदाता । नृपः=रघुश्च इति । तौ=रघुकौत्सौ । द्वावपि=उभावपि । साकेतनिवासिनः=अयोध्यावासिनः । जनस्य=नरस्य जनसमुदायस्य । अर्थी= याचकः कौत्सः । अभिनन्द्यसत्त्वौ=स्तुत्यव्यवसायावभूताम् ॥ ३१ ॥

अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना
महर्षिः ॥ स्पृशन्करेणानतपूर्वकायं संप्रस्थितो-
वाचमुवाच कौत्सः ॥ ३२ ॥

अथ=तदनन्तरम् । प्रीतमनाः=प्रसन्नचेताः सन्तुष्ट इति यावत् । महर्षिः=महामुनिः कौत्सः । सम्प्रस्थितः=प्रयाणाभिमुखस्सन् । उष्ट्राणाम्=क्रमेलानाम् । वामीनाम्=वडवानाम् । शतैः=शतसङ्ख्याकैः । वाहितार्थम्=प्रापितधनम् । आनतपूर्वकायम्=विनयनम्रम् प्रणमन्तमित्यर्थः । प्रजेश्वरम्=जनाधिपं रघुम् । करेण=हस्तेन । स्पृशन्=स्पर्शं कुर्वन् । वाचमुवाच=वचनं जगाद [1] ॥ ३२ ॥

किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम् ॥ अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा ॥ ३३ ॥

वृत्ते=सदाचारे । स्थितस्य=वर्त्तमानस्य । प्रजानाम्=लोकानाम् । अधिपतेः=अधीश्वरस्य । भूः=धरा । यदि=चेत् । कामसूः=कामदात्री । तर्ह्यत्र=अस्मिन् विषये । किं चित्रम्=किमाश्चर्यम् न किमपीत्यर्थः । किंतु तव=ते । प्रभावः=महिमा । अचिन्तनीयः=अतर्क्यः । येन=त्वया । द्यौरपि=दिवमपि । मनीषितम्=इच्छानुरूपम् । दुग्धा=अदुह्यत ॥ ३३ ॥

आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते ॥ पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव ॥ ३४ ॥

सर्वाणि=सकलानि । श्रेयांसि=कल्याणानि । अधिजग्मुषः=प्राप्तवतः उपभोगं कुर्वतो वा । ते=तव । अन्यत्=अपत्यातिरिक्तं । आशास्यम्=आशीः । पुनरुक्तभूतम्=कृतस्य कारणम् । पिष्टपेषणवद्व्यर्थमेवेत्यर्थः । ईड्यम्=स्तुत्यम् । भवन्तम्=त्वाम् । भवतः=तव । पितेव=जनक इव ।

---

१ 'वाचमिति' अधिकपदत्वदोषः ।

आत्मगुणानुरूपम्=त्वया सदृशगुणम् । पुत्रम्=तनयम् । लभस्व=प्राप्नुहि यथा तव पिता त्वां लब्धवान् । तथैव त्वमपि पुत्रं प्राप्नुहीति निर्गलितोऽर्थः ॥ ३४ ॥

**इत्थं प्रयुज्याशिषमग्रजन्मा राज्ञे प्रतीयाय गुरोः सकाशम् ॥ राजापि लेभे सुतमाशु तस्मादालोकमर्कादिव जीवलोकः ॥ ३५ ॥**

अग्रजन्मा=ब्राह्मणः कौत्सः । इत्थम्=पूर्वोक्तप्रकारेण । राज्ञे=रघवे नृपाय । आशिषम्=आशीर्वचनम् । प्रयुज्य=दत्वा । गुरोः=शिक्षकस्य वरतन्तोः । सकाशम्=समीपम् । प्रतीयाय=प्रत्युज्जगाम । राजापि=रघुरपि । जीवलोकः=जीवसमूहः । अर्कात्=रवेः सकाशादित्यर्थः । आलोकमिव=प्रकाशमिव । तस्मात्=कौत्सात् आशीर्वचनाद्वा । आशु=शीघ्रमेव । सुतम्=पुत्रम् । लेभे=प्राप ॥ ३५ ॥

**ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम् ॥ अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार ॥ ३६ ॥**

तस्य=रघोः । देवी=राजमहिषी ' देवी कृताभिषेकायामित्यमरः ' । ब्राह्मे=ब्रह्मदेवतासंबंधिनि । मुहूर्ते=काले । कुमारकल्पम्=स्कन्दसदृशम् । ईषदूनकुमारः कुमारकल्पस्तं पुत्रम् । सुषुवे=सूतवती । अतः=असमादेव कारणात् । पिता=रघुः । ब्रह्मणः=विधेरेव । नाम्ना=अभिधानेन । तम्=आत्मजन्मानम् स्वतनयम् । अजम्=अजनामकम् । चकार=अकार्षीत् ॥ ३६ ॥

**रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम् ॥ न कारणात् स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ॥ ३७ ॥**

ओजस्वि=तेजस्वि । रूपम्=सौन्दर्य्यम् । तदेव=पैतृकमेव । वीर्य्यम्=शौर्य्यम् । तदेव=तथैव । नैसर्गिकम्=स्वाभाविकम् । तदेव=तादृशमेव । उन्नतत्वम्=उच्चत्वम् । कुमारः=बालकः । प्रवर्त्तितः=उत्पादितः । दीपः=प्रकाशसाधनम् । प्रदीपात्=स्वोत्पादकदीपादिव । स्वात्=स्वीयात् ॥ कारणात्=जनकात् । न विभिदे=भेदं न प्राप ॥ ३७ ॥

उपात्तविद्यं विधिवद्गुरुभ्यस्तं यौवनोद्भेदविशेष-
कान्तम् ॥ श्रीः साभिलाषापि गुरोरनुज्ञां धीरेव
कन्या पितुराचकाङ्क्ष ॥ ३८ ॥

गुरुभ्यः=आचार्य्येभ्यः शिक्षकेभ्यो वा । विधिवत्=यथाविहितम् । उपात्तविद्यम्=अधीतशास्त्रम् । यौवनस्य=तारुण्यस्य । उद्भेदात्=आविर्भावात् । कान्तम्=मनोहरम् । तम्=अजम्प्रति । साभिलाषापि=सोत्कंठापि । श्रीः=शोभा राज्यलक्ष्मीरित्यर्थः । धीरा=धैर्यवती । कन्या=कुमारी । पितुरिव=जनकस्येव । गुरोः=आचार्यस्य जनकस्य वा । अनुज्ञाम्=आदेशम् । आचकाङ्क्ष=इयेष ॥ ३८ ॥

अथेश्वरेण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दु-
मत्याः ॥ आप्तः कुमारानयनोत्सुकेन भोजेन
दूतो रघवे विसृष्टः ॥ ३९ ॥

अथ=अनन्तरम् । स्वसुः=निजभगिन्याः । इन्दुमत्याः=इन्दुमतीनाम्न्याः । स्वयंवरार्थम्=स्वयंवरकरणाय । कुमारस्य=अजस्य । आनयने=आह्वाने । उत्सुकेन=उत्कंठितेन । क्रथकैशिकानाम्=विदर्भदेशानाम् । ईश्वरेण=अधिपतिना । भोजेन=राज्ञा । आप्तः=सत्यवाक् । दूतः=प्रणिधिः । रघवे । विसृष्टः=प्रेषितः ॥ ३९ ॥

तं श्लाघ्यसंबन्धमसौ विचिन्त्य दारक्रियायोग्य-
दशं च पुत्रम् ॥ प्रस्थापयामास ससैन्यमेनमृद्धां
विदर्भाधिपराजधानीम् ॥ ४० ॥

असौ=स रघुः । तम्=अजम् । श्लाघ्यसम्बन्धम्=स्तुत्यसम्बन्धम् । विचिन्त्य=विमृश्य । पुत्रश्च=सुतश्च । दारक्रियायोग्यदशम्=विवाहानुरूपावस्थम् । विचिन्त्य=विचार्य । ससैन्यम्=सबलम् । एनम्=अजम् । ऋद्धाम् । स्फीताम् । विदर्भाधिपस्य=भोजस्य । राजधानीम्=पुरीं प्रति । प्रस्थापयामास=प्रेषयामास ॥ ४० ॥

तस्योपकार्यारचितोपचारा वन्येतरा जानपदोपदाभिः ॥ मार्गे निवासा मनुजेन्द्रसूनोर्बभूवुरुद्यानविहारकल्पाः ॥ ४१ ॥

मनुजेन्द्रसुनोः=रघुपुत्रस्य । तस्य=अजस्य । मार्गे=पथि । उपकार्यासु=पटमण्डपेषु । रचिताः=निर्मिताः । उपचाराः=आवश्यकीयानि वस्तूनि येषु तथोक्ताः । जानपदानाम्=जनपदेभ्य आगतानाम् । उपदाभिः=वस्तुभिः वन्येभ्यः=आरण्यकेभ्यः । इतरे=अन्ये । निवासाः=स्थानविशेषाः । उद्यानान्याक्रीडाः तान्येव विहारा विहारस्थानानि । तत् कल्पाः=तत्सदृशाः । बभूवुः=आसन् ॥ ४१ ॥

स नर्मदारोधसि सीकरार्द्रैर्मरुद्भिरानर्तितनक्तमाले ॥ निवेशयामास विलङ्घिताध्वा क्लान्तं रजोधूसरकेतुसैन्यम् ॥ ४२ ॥

विलङ्घिताध्वा=अतीतमार्गः । सोऽजः । सीकरार्द्रैः=अम्बुकणशिशिरैः 'सीकरोम्बुकणस्मृतः' इत्यमरः । मरुद्भिः=पवनैः । आनर्तिताः=ईषत्कम्पिताः । नक्तमालाः=चिरविल्वाख्यवृक्षविशेषा यस्मिन् तस्मिन् । नर्मदारोधसि=रेवातटे । क्लान्तम्=श्रान्तम् । रजोभिः=धूलिभिः । धूसराः=मलिनाः । केतवो=ध्वजा यस्य तत् । सैन्यम्=अनीकम् । निवेशयामास=स्थापितवान् ॥ ४२ ॥

अथोपरिष्टाद्भ्रमरैर्भ्रमद्भिः प्राक्सूचितान्तःसलिल-
प्रवेशः ॥ निर्धौतदानामलगण्डभित्तिर्वन्यः स-
रित्तो गज उन्ममज्ज ॥ ४३ ॥

अथ=सेनानिवेशनानन्तरम् । उपरिष्टात्=ऊर्ध्वम् । भ्रमद्भिः=विचरद्भिः । भ्रमरैः=द्विरेफैः । प्राक्=उन्मज्जनात्पूर्वम् । सूचितः=ज्ञापितः । अन्तःसलिले=वारिमध्ये । प्रवेशः=गमनो यस्य तथोक्तः । निर्धौतदानेन=क्षालितमदेन । अमलः=स्वच्छा । गण्डभित्तिः=कपोलभित्तिर्यस्य तथोक्तः । वन्यः=अरण्ये जातः । गजः=हस्ती । सरित्तः=नद्याः सकाशात् । उन्ममज्ज=उद्गतः ॥ ४३ ॥

निःशेषविक्षालितधातुनापि वप्रक्रियामृक्षवतस्तटेषु ॥ नीलोर्ध्वरेखाशबलेन शंसन्दंतद्वयेनाश्मविकुण्ठितेन ॥ ४४ ॥ युग्मम् ॥

निःशेषेण=समग्रतया । विक्षलितः=धौतः । धातुः=गैरिकादिर्यस्य तेनापि । नीलाभिः=नीलवर्णाभिः । ऊर्ध्वाभिः=उद्गताभिः । रेखाभिः=तटाभिघातजनितक्षतैः । शबलेन=कर्बुरेण । अश्मभिः=पाषाणैः । विकुण्ठितेन=कुण्ठीकृतेन । दन्तद्वयेन=दशनमिथुनेन । ऋक्षवतः—ऋक्ष्य चिह्न गिरेः । तटेषु=प्रान्तेषु । वप्रक्रियाम्=उत्खातकेलिम् । शंसन्=कथयन्सूचयन्नित्यर्थः बभावित्यग्रेणान्वयः ॥ ४४ ॥

संहारविक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दम् ॥ बभौ स भिंदन्बृहतस्तरंगान्वार्यर्गलाभङ्ग इव प्रवृत्तः ॥ ४५ ॥

संहारविक्षेपयोः=आकुंचनप्रसारणयोः । लघुक्रियेण=द्रुतव्यापारेण ।

हस्तेन=शुण्डादण्डेन । सशब्दम्=सरवम् । बृहतः=विस्तृतान् । तरङ्गान्=ऊर्मीन् । भिन्दन्=विदारयन् । तीराभिमुखः तटोन्मुखः । सः=गजः । वार्य्याः=गजबन्धिन्याः । अर्गलायाः=विष्कुम्भस्य । भङ्गे=विदारणे । प्रवृत्त इव=उद्यत इव । बभौ=शुशुभे ॥ ४५ ॥

शैलोपमः शैवलमञ्जरीणां जालानि कर्षन्नुरसा स पश्चात ॥ पूर्वं तदुत्पीडितवारिराशिः सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥

शैलोपमः=पर्वताकारः । सः=हस्ती । शैवलमञ्जरीणाम्=शेवालवल्लरीणाम् । जालानि=वृन्दानि । उरसा=वक्षसा । कर्षन्=संघर्षयन् सार्द्धं वहन्निरर्थः । पश्चाद्=अनन्तरम् । तटम्=कूलम् । उत्ससर्प=उज्जगाम । पूर्वम्=तस्यागमनात् प्रागेव । तेन=हस्तिना । उत्पीडितः=प्रेरितः । वारिराशिः=जलौघो यस्य तथोक्तः । सरित्प्रवाहः=नदीवेगः । तटम्=कूलम् । उत्ससर्प=उद्ययौ ॥ ४६ ॥

तस्यैकनागस्य कपोलभित्त्योर्जलावगाहक्षणमात्रशान्ता ॥ वन्येतरानेकपदर्शनेन पुनर्दिदीपे मददुर्दिनश्रीः ॥ ४७ ॥

तस्य एकनागस्य=एकाकिनो वनगजस्य । कपोलभित्त्योः=कटाभित्योः । जलावगाहन=वारिस्नानेन । क्षणमात्रम्=किञ्चित्कालम् । शान्ता=निवृत्ता । मददुर्दिनश्रीः=दानवारिवर्षणशोभा । वन्येतरेषाम्=ग्राम्याणाम् । अनेकपानाम्=द्विपानां गजानामिति यावत् । दर्शनेन=अवलोकनेन । पुनः=भूयः । दिदीपे=ववृधे तत्क्षणएव सस्रावेत्यर्थः ॥ ४७ ॥

सप्तच्छदक्षीरकटुप्रवाहमसह्यमाघ्राय मदं तदी-

यम् ॥ विलङ्घिताधोरणतीव्रयत्नाः सेनागजेन्द्रा विमुखा बभूवुः ॥ ४८ ॥

सप्तच्छदस्य=सप्तपर्णवृक्षस्य । क्षीरवत्=दुग्धसदृशम् । कटुः=सुगन्धिः । प्रवाहः=प्रसारो यस्य तम् । असह्यम्=सोढुमनर्हम् । तदीयम्=वन्यगजसम्बन्धि । मदम्=दानवारि । आघ्राय=घ्रात्वत्वा नासापुटाभ्यामवगृह्येत्यर्थः । विलङ्घितः=तिरस्कृतः । आधोरणानाम्=हस्तिपकानाम् । तीव्रः=तीक्ष्णः । यत्नः=प्रयासो यैस्तथोक्ताः । सेनागजेन्द्राः=सैन्यहस्तिनः । विमुखाः=पराङ्मुखाः । बभूवुः=आसन् ॥ ४८ ॥

स छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन ॥ रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार ॥ ४९ ॥

सः=हस्ती । छिन्नबन्धाः=खंडितबन्धनसाधनरज्जवो यैस्ते तथा । द्रुताः=पलायिताः । युग्याः=वाहा यस्मिंस्तथाभूतश्चासौ शून्यः=निर्जनः तम् । भग्नाः=निरस्ताः । अक्षाः=स्यन्दनावयवकाष्ठविशिष्टा येषां तथा भूताः । तथा पर्यस्ताः=विशीर्णाः । रथाः=स्यन्दना यस्मिंस्तम् । रामाणाम्=स्त्रीणां । परित्राणे=परिरक्षणे । विहस्ताः=व्यग्राः । योधाः=भटा यस्मिंस्तम् । सेनानिवेशम्=शिविरम् । क्षणेन=अल्पकालेन । तुमुलम्=सङ्कुलम् भयावहं वा । चकार=अकृत ॥ ४९ ॥

तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान् कुमारः ॥ निवर्तयिष्यन् विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः ॥ ५० ॥

नृपतेः=भूपालस्य । वन्यः=अरण्यः । करी=हस्ती । अवध्यः=हन्तुमनर्हः ।

इति=एतच्छास्त्रानुशासनम् । श्रुतवान्=ज्ञातवान् । कुमारः=अजः । आपतन्तम्=प्रतिधावन्तम् । तम्=करिणम् । निवर्त्तयिष्यन्=निवारयिष्यन् । नात्यायतम्=नातिदीर्घम् यथा तथा । कृष्टशार्ङ्गः=ईषदाकृष्टधनुः सन् । विशिखेन=शरेण । कुम्भे=गण्डस्थले । जघान=बिभेद ॥ ५० ॥

स विद्धमात्रः विल नागरूपमुत्सृज्य तद्विस्मितसैन्यदृष्टः ॥ स्फुरत्प्रभामण्डलमध्यवर्ति कान्तं वपुर्व्योमचरं प्रपेदे ॥ ५१ ॥

सः=हस्ती । विद्धमात्रः=ताडितमात्र एव । नागरूपम्=गजदेहम् । उत्सृज्य=विहाय । तेन=पूर्वोक्तेन वृत्तान्तेन । विस्मितैः=साश्चर्यैः । सैन्यैः=सेनाजनैः । दृष्टः=अवलोकितः सन् । स्फुरतः=विभ्राजमानस्य । प्रभामण्डलस्य=कान्तिसमुदायस्य । मध्यवर्तिं=अन्तर्गतम् । कान्तम्=सुन्दरम् । व्योमचरम्=अकाशगम् । वपुः=कलेवरम् । प्रपेदे=लेभे ॥ ५१ ॥

अथ प्रभावोपनतैः कुमारं कल्पद्रुमोत्थैरवकीर्य पुष्पैः ॥ उवाच वाग्मी दशनप्रभाभिः संवर्धितोरःस्थलतारहारः ॥ ५२ ॥

अथ=अनन्तरम् । प्रभावेण=प्रतापेन । उपनतैः=प्राप्तैः । कल्पद्रुमोत्थैः=देवतरूत्पन्नैः । पुष्पैः=सुमनैः । कुमारम्=अजम् । अवकीर्य=अभिवृष्य । दशनप्रभाभिः=दन्तकान्तिभिः । संवर्द्धिताः=समेधिताः । उरःस्थले=वक्षसि । तारहाराः=स्थूलमुक्तामाला येन तथोक्तः । वाग्मी 'वाचोग्मिनि' इति ग्मिनि प्रत्ययः=वावदूकः । सः=दिव्यशरीरधारी पुरुषः । उवाच=जगाद ॥ ५२ ॥

मतङ्गशापादवलेपमूलादवाप्तवानस्मि मतङ्गजत्वम् ॥
अवेहि गंधर्वपतेस्तनूजं प्रियंवदं मां प्रियदर्शनस्य ॥५३॥

अवलेपमूलात्=अभिमानकारणीभूतात् । मतङ्गस्य=कस्यचिन्मुनेः । शापात्=अनिष्टवाक्यात् । मतङ्गजत्वम्=गजत्वम् । अवाप्तवानस्मि=लब्धवानस्मि । माम् । प्रियदर्शनस्य=प्रियदर्शनाभिधस्य । गन्धर्वपतेः=गन्धर्वराजस्य । प्रियंवदम्=प्रियंवदनामानम् । तनूजम्=अंगजम् । अवेहि=जानीहि ॥ ५३ ॥

स चानुनीतः प्रणतेन पश्चान्मया महर्षिर्मृदुताम-
गच्छत् ॥ उष्णत्वमग्न्यातपसंप्रयोगाच्छैत्यं हि
यत्सा प्रकृतिर्जलस्य ॥ ५४ ॥

सः=पूर्वोक्तः । महर्षिश्च=महामुनिश्च । प्रणतेन=विनयंनम्रेण । मया=गन्धर्वेण । अनुनीतः=प्रार्थितः । पश्चात्=प्रार्थनानन्तरम् । मृदुताम्=शान्तिम् दयामिति यावत् ।अगच्छत्=प्राप । हि=यतः । जलस्योष्णत्वम्=अशीतलत्वमुत्तापो वा । अग्नेः=वह्नेः । आतपस्य=घर्मस्य । संप्रयोगात्=संपर्कात् । जायते । यच्छैत्यम्=यच्छीतलत्वम् । सा जलस्य=अंभसः । प्रकृतिः=स्वभावः ॥ ५४ ॥

इक्ष्वाकुवंशप्रभवो यदा ते भेत्स्यत्यजः कुम्भमयो-
मुखेन ॥ संयोक्ष्यसे स्वेन वपुर्महिम्ना तदेत्यवो-
चत्स तपोनिधिर्माम् ॥ ५५ ॥

इक्ष्वाकुवंशप्रभवः=इक्ष्वाकुकुलोत्पन्नः अजः । यदा=यस्मिन् समये । ते=तव । कुम्भम्=गंडम् । अयोमुखेन=लोहाग्रेण शरेण । भेत्स्यति=छेत्स्यति । तदा=तस्मिन् समये । स्वेन=स्वकीयेन । वपुषः=देहस्य । महिम्ना=

प्रतापेन । संयोक्ष्यसे=मिलिष्यसि । इति=अनेन प्रकारेण । स तपोनिधिः=असौ महात्मा मतङ्गः । माम्=प्रियंवदम् । अवोचत्=अवदत् ॥ ५५ ॥

संमोचितः सत्त्ववता त्वयाहं शापाच्चिरप्रार्थितदर्शनेन ॥ प्रतिप्रियं चेद्भवतो न कुर्यां वृथा हि मे स्यात्स्वपदोपलब्धिः ॥ ५६ ॥

चिरम्=बहुकालम् । प्रार्थितम्=वाञ्छितम् । दर्शनम्=चक्षुर्विषयगोचरम् यस्य तेन । सत्त्ववता=बलवता । त्वया=भवता । अहम्=प्रियंवदः । शापात्=मतङ्गकोपात् । संमोचितः=मोक्षं प्रापितः । अतो भवतः=तव । प्रतिप्रियम्=प्रत्युपकारम् । चेत्=यदि । न कुर्याम्=नो विदधीय । तर्हि मे=मम । स्वपदोपलब्धिः=स्वीयस्थानप्राप्तिः निजदेहलाभ इत्यर्थः । वृथाहि=निष्फलमेव । स्यात्=भवेत् ॥ ५६ ॥

सम्मोहनं नाम सखे ! ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम् ॥ गान्धर्वमादत्स्व यतः प्रयोक्तुर्न चारिहिंसा विजयश्च हस्ते ॥ ५७ ॥

हे सखे ! अयि मित्र ! प्रयोगसंहारयोः=विसर्गादानयोः । विभक्तमन्त्रम्=पृथङ्मन्त्रम् । गान्धर्वम्=गन्धर्वदेवताकम् । संमोहनं नाम=संमोहनाख्यम् । मम=प्रियंवदस्य । अस्त्रम्=आयुधम् । आदत्स्व=गृहाण । यतः=यस्मात् । प्रयोक्तुः=अस्त्रप्रयोगकर्त्तुः । आरीहिंसा=शत्रुवधजा हत्या न भवति । विजयश्च=जयप्राप्तिश्च । हस्ते=हस्तगता एवेत्यर्थः ॥ ५७ ॥

अलं ह्रिया मां प्रति यन्मुहूर्तं दयापरोऽभूः प्रहरन्नपि त्वम् ॥ तस्मादुपच्छन्दयति प्रयोज्यं मयि त्वया न प्रतिषेधरौक्ष्यम् ॥ ५८ ॥

मामू=प्रियंवदं प्रति । ह्रिया=प्रहारहेतुकया लज्जया । अलम्=प्रयोजनं नास्ति । यत्=यतो हेतोः । त्वम्=भवान् । माम्=प्रियंवदम् । प्रहरन्नपि=निघ्नन्नपि । मुहूर्त्तम्=किञ्चित् कालम् । दयापरः=कृपालुः । अभूः=अभवः । तस्मात्कारणात् । उपच्छन्दयति=प्रार्थयमाने । मयि=गन्धर्वे । त्वया । प्रतिषेधः=अस्त्रग्रहणेऽनादरः । स एव रौक्ष्यम्=पारुष्यम् । न प्रयोज्यम्=नो विधेयम् ॥ ५८ ॥

**तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः ॥ उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात् ॥ ५९ ॥**

नृसोमः=पुरुषोत्तमः । अस्त्रवित्=अस्त्रज्ञः । सः=अजः । तथेति=स्वीकृत्य । सोमः=चन्द्रः । उद्भवः=हेतुः । यस्यास्तस्याः=सोमोद्भवायाः । सरितः=नर्मदायाः । पवित्रम्=पूतम् । पयः=जलम् । उपस्पृश्य=आचम्य । उदङ्मुखः=उत्तराभिमुखः सन् । निगृहीतशापात्=निर्मुक्तशापात् । तस्मात्=प्रियंवदात् । अस्त्रमन्त्रम्=अस्त्रविद्याम् । जग्राह=गृहीतवान् ॥ ५९ ॥

**एवं तयोरध्वनि दैवयोगादासेदुषोः सख्यमचिन्त्यहेतु ॥ एको ययौ चैत्ररथप्रदेशान् सौराज्यरम्यानपरो विदर्भान् ॥ ६० ॥**

एवम्=उक्तप्रकारेण । अध्वनि=मार्गे । दैवयोगात्=प्रारब्धवशात् । अचिन्त्यहेतु=अवितर्क्यकारणम् । सख्यम्=सौहार्दम् । आसेदुषोः=प्राप्तवतोः । तयोः=अजगन्धर्वयोर्मध्ये । एकः=गन्धर्वः । चैत्ररथस्य=कुबेरोद्यानस्य । प्रदेशान्=विषयान् प्रान्तान्वा । अपरः=अजः । सौराज्येन=सम्यक् परिपालनेन । रम्यान्=कान्तान् । विदर्भान्=विदर्भदेशान् । ययौ=जगाम ॥ ६० ॥

तं तस्थिवांसं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः ॥
प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली ॥ ६१ ॥

नगरस्य=पुरस्य । उपकण्ठे=निकटे । तस्थिवांसम्=स्थितम् । तम्=अजम् । तस्य=अजस्य । आगमनेन=आयानेन । आरूढः=आविर्भूतः । गुरुः=प्रभूतः । प्रहर्षः=आनन्दातिशयो यस्य तथोक्तः । क्रथकैशिकेन्द्रः=विदर्भनाथः । प्रवृद्धोर्मिः=उद्गततरङ्गः । ऊर्मिमाली=समुद्रः । चन्द्रमिव=शशिनमिव । प्रत्युज्जगाम=अभिमुखो बभूव ॥ ६१ ॥

प्रवेश्य चैनं पुरमग्रयायी नीचैस्तथोपाचरदर्पितश्रीः ॥ मेने यथा तत्र जनः समेतो वैदर्भमागन्तुमजं गृहेशम् ॥ ६२ ॥

एनम्=अजम् । अग्रयायी=नागवर्त्ती । आर्पितश्रीः=ानेवेदितैश्वर्यो भोजः । पुरम्=नगरम् । प्रवेश्य=प्रवेशं कारयित्वा । प्रीत्या=प्रेम्णा । नीचैः=नम्रतया । तथा=तेन प्रकारेण । उपाचरत्=सेवितवान् । यथा=येन प्रकारेण । तत्र=नगरे । समेतः=एकीभूतः । जनः=नरसमुदायः । वैदर्भम्=विदर्भाधिपतिम् । आगन्तुम्=अतिथिम् । अजम्=रघुसूनुं च । गृहेशम्=गृहपतिम् । मेने=अमन्यत ॥ ६२ ॥

तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टाम्,
प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम् ॥
रम्यां रघुप्रतिनिधिः सनवोपकार्याम्,
बाल्यात्परामिव दशां मदनोऽध्युवास ॥ ६३ ॥

रघुप्रतिनिधिः=रघुतुल्यः । सः=अजः । प्रणतैः=विनयनम्रैः ।

तस्य=विदर्भाधिपस्य । अधिकार:=नियोगः । तस्य पुरुषैः=अधिकृतैः अधिकारिपुरुषैः । प्रदिष्टाम्=प्रदर्शिताम् । प्राग्द्वारस्य=पूर्वद्वारस्य । वेद्याम्=बाह्यबद्धभूमौ । विनिवेशिताः=प्रतिष्ठापिताः । पूर्णकुम्भाः=सजलकलशाः यस्यास्ताम् । रम्याम्=मनोहारिणीम् । नवोपकार्याम्=नव्यनृपभवनम् । मदनः=कामदेवः । बाल्यात्=शैशवात् । पराम्=अनन्तराम् । दशाम्=अवस्थामिव तारुण्यमिवेत्यर्थः । अध्युवास=अधिष्ठितवान् ॥ ६३ ॥

तत्र स्वयंवरसमाहृतराजलोकम्,
कन्याललाम कमनीयमजस्य लिप्सोः ॥
भावावबोधकलुषा दयितेव रात्रौ,
निद्रा चिरेण नयनाभिमुखी बभूव ॥ ६४ ॥

तत्र=नवोपकार्यायाम् । स्वयंवरेण=स्वयं वरनिमित्तेन । समाहृतः=आकृष्टः समाहूतो वा । राजलोकः=भूपसमुदायो येन तत् । कमनीयम्=हृद्यम् । कन्यासु=कुमारिकासु । ललाम=सुन्दरम् । लिप्सोः=लब्धमिच्छोः । अजस्य=रघुपुत्रस्य । भावावबोधे=पत्युरभिप्रायपरिज्ञाने । कलुषा=असक्ता । दयितेव=कान्तेव । रात्रौ=निशि । निद्रा=शयनावस्था । चिरेण=अनल्पकालेन । नयनाभिमुखी=नेत्रगामिनी । बभूव=आसीत् ॥ ६४ ॥

तं कर्णभूषणनिपीडितपीवरांसम्,
शय्योत्तरच्छदविमर्दकृशाङ्गरागम् ॥
सूतात्मजाः सवयसः प्रथितप्रबोधम्,
प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥ ६५ ॥

कर्णभूषणाभ्याम्=श्रवणकुंडलाभ्यां । निपीडितौ=क्लिष्टौ । पीवरौ=

पुष्टौ । अंसौ=स्कन्धौ यस्य तम् । शय्यायाः=तल्पस्य । यः उत्तरच्छदः=उत्तरास्तरणः । तस्य विमर्दनेन=घर्षणेन । कृशः=मन्दः । अङ्गरागः=गन्धद्रव्यविशेषो यस्य तम् । प्रथितप्रबोधम्=विस्तृतज्ञानम् । तम्=अजम् । सवयसः=समानवयस्काः । उदारवाचः=मनोहरवाचः । सूतात्मजाः=वन्दिपुत्राः । वाग्भिः=स्तुतिवचनैः । उषसि=प्रभाते । प्राबोधयन्=प्रबोधयामासुः ॥ ६५ ॥

रात्रिर्गता मतिमतां वर! मुञ्च शय्याम्, धात्रा द्विधैव-
ननु धूर्जगतो विभक्ता ॥ तामेकतस्तव बिभर्ति
गुरुर्विनिद्रस्तस्या भवानपरधुर्यपदावलम्बी ॥ ६६ ॥

हे मतिमतां वर !=हे सुबुद्धे ! । रात्रिः=निशा । गता=अतीता । शय्याम्=तल्पम् । मुञ्च=त्यज । धात्रा=ब्रह्मणा । जगतः=भूलोकस्य । धूः=भारः । द्विधैव=द्वयोरेवेत्यर्थः । विभक्ता ननु=विभज्य स्थापिता खलु । ताम्=जगतो धुरम् । एकतः=एकस्मिन् बाह्यभागे । तव गुरुः=तव पिता । विनिद्रः=त्यक्तशयनः सावधानः सन्नित्यर्थः । बिभर्त्ति=धरति । तस्याः=जगतो धुरः । भवान्=रघुसूनुः । अपरधुर्यस्य=जगतो भारस्यापरभागस्य । पदम्=वाहनस्थानम् । तस्यावलम्बी=आश्रयः त्वमसि ॥ ६६ ॥

निद्रावशेन भवताप्यनवेक्ष्यमाणा,
पर्युत्सुकत्वमबला निशि खण्डितेव ॥
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी,
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥ ६७ ॥

निद्रावशेन=शयनाधीनेन । भवता=त्वया । पर्युत्सुकत्वमपि=अनुरक्तत्वमपि । निशि=रात्रौ । खण्डिता=पत्युरन्यासङ्गज्ञानकलुषिता नारीव । अनवेक्षमाणा=उपेक्षमाणा । लक्ष्मीः=श्रीः । येन=चन्द्रेण । पर्युत्सुक-

त्वम्=विरहवेदनाम् । विनोदयति=निरासयति । अथवा । विनोदयति=विनोदं विदधाति । सः=तथोक्तोऽपि । चन्द्रः=शशी । दिगन्तलम्बी=पश्चिमाशां प्राप्तः सन् । त्वदाननरुचिम्=त्वन्मुखशोभाम् । विजहाति=त्यजति ॥ ६७ ॥

तद्वल्गुना युगपदुन्मिषितेन ताव-
त्सद्यः परस्परतुलामधिरोहतां द्वे ॥
प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥ ६८ ॥

तत्=तस्मात्कारणात् । वल्गुना=सुन्दरेण । युगपत्=सममेव । तावत्=तत्परिमाणस्य । उन्मिषितेन=उन्मीलितेन । अन्तः=मध्ये । प्रस्पन्दमाना=चञ्चला । परुषेतरा=सौम्या । तारा=कनीनिका यस्य तथोक्तम् । तव=भवतः । चक्षुः=नेत्रम् । अन्तः=मध्ये । प्रचलितभ्रमरम्=चलद्द्विरेफम् । पद्मञ्च=कमलञ्च । द्वे=उभेऽपि । सद्यः=तत् कालमेव । परस्परतुलाम्=अन्योन्यसाम्यम् । अधिरोहताम्=अधिगच्छताम् ॥ ६८ ॥

वृन्ताच्छ्लथं हरति पुष्पमनोकहानाम्,
संसृज्यते सरसिजैररुणांशुभिन्नैः ॥
स्वाभाविकं परगुणेन विभातवायुः,
सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥ ६९ ॥

विभातवायुः=प्रातःसमीरः । स्वाभाविकम्=नैसर्गिकम् प्रकृतिजं वा । ते=तव । मुखमारुतस्य=निःश्वासवातस्य । सौरभ्यम्=सौगन्ध्यम् । परगुणेन=सांक्रामिकगन्धेन । ईप्सुः=लब्धुमिच्छुरिव । अनोकहानाम्=उपवनवृक्षाणाम् । वृन्तात्=प्रसवबन्धात् । श्लथम्=शिथिलम् च्युतं वा ।

पुष्पम्=कुसुमम् । हरति=आदत्ते । अरुणांशुभिन्नैः=रविकिरणोत्फुल्लैः । सरसिजैः=पद्मैः । संसृज्यते=संगच्छते ॥ ६९ ॥

ताम्रोदरेषु पतितं तरुपल्लवेषु,
निर्धौतहारगुलिकाविशदं हिमाम्भः ॥
आभाति लब्धपरभागतयाधरोष्ठे,
लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥ ७० ॥

ताम्रोदरेषु=रक्तमध्येषु । तरुपल्लवेषु=वृक्षकिशलयेषु । पतितम्=च्युतम् । निर्धौताः=स्वच्छाः । या हारगुलिकाः=मुक्तामणयः । तद्वद्विशदम्=निर्मलम् । हिमाम्भः=शिशिरजलम् । लब्धपरभागतया=गृहीतोत्कर्षतया । अधरोष्ठे=अधरदन्तच्छदे । त्वदीयम्=भवदीयम् । सदशनार्चिः=दन्तकान्तिसहितम् । लीलास्मितम्=विलासहासमिव । आभाति=विराजते ॥ ७० ॥

यावत्प्रतापनिधिराक्रमते न भानु-
रह्नाय तावदरुणेन तमो निरस्तम् ॥
आयोधनाग्रसरतां त्वयि वीर ! याते,
किंवा रिपूँस्तव गुरुः स्वयमुच्छिनत्ति ? ॥ ७१ ॥

प्रतापनिधिः=तेजोराशिः । भानुः=सूर्यः । यावत्=यदावधि । नाक्रमते=नोदेति । तावत्=तदावधि । अह्नाय=अहःकर्तुं । अरुणेन=अनूरुणा सूर्यसूतेनेत्यर्थः । तमः=अन्धकारः । निरस्तम्=दूरीकृतम् । हे वीर!=हे बलिन्! । त्वयि=भवति । आयोधनेषु=युद्धेषु । अग्रसरताम्=पुरोगामित्वम् । याते=प्राप्ते सति । तव=भवतः । गुरुः=पिता । किम् ?=कच्चित् । स्वयम्=आत्मनैव । रिपून्=शत्रून् । उच्छिनत्ति=विनाशयति । अपितु नेत्यर्थः ॥ ७१ ॥

शय्या जहत्युभयपक्षविनीतनिद्राः,
स्तम्बेरमा मुखरशृंखलकर्षिणस्ते ॥
येषां विभान्ति तरुणारुणरागयोगा-
द्भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ ७२ ॥

उभाभ्याम्=द्वाभ्याम् । पक्षाभ्याम्=पार्श्वाभ्याम् । विनीता=दूरीकृता निद्रा=शयनावस्था येषां तथोक्ताः । मुखराणि=उत्थानचलाच्छब्दायमानानि । शृंखलानि=निगडानि कर्षन्तीति तथोक्ताः । येषाम्=हस्तिनाम् । दन्ताः=रदाः । कोशा इव=कुड्मला इव । तरुणारुणारागयोगात्=औदयिकसूर्यारुणसंबन्धात् । भिन्नाद्रिगैरिकतटा इव=उत्कृतगैरिकप्रान्ता इव । विभान्ति=शोभन्ते । स्तम्बेरमाः=हास्तिनः । शय्याम्=तल्पम् । जहति=त्यजन्ति ॥ ७२ ॥

दीर्घेष्वमी नियमिताः पटमण्डपेषु,
निद्रां विहाय वनजाक्ष ! वनायुदेश्याः ॥
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि,
लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥ ७३ ॥

हे वनजाक्ष !=हेकमलनयन ! । दीर्घेषु=विस्तृतेषु । पटमण्डपेषु=उपकार्यासु शिबिरेषु वा । नियमिताः=बद्धाः । वनायुदेश्याः=पारसीकाः । अमी=एते । वाहाः=अश्वाः । निद्राम्=शयनावस्थाम् । विहाय=त्यक्त्वा । पुरोगतानि=अग्रेधृतानि । लेह्यानि=आस्वाद्यानि । सैन्धवशिलाशकलानि=सैन्धवलवणखण्डानि । वक्त्रोष्मणा=आननबाष्पेण । मलिनयन्ति=मलिनीकुर्वन्ति ॥ ७३ ॥

भवति विरलभक्तिर्म्लानपुष्पोपहारः,
स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः ।

अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ता-
मनुवदति शुकस्ते मञ्जुवाक्पञ्जरस्थः ॥ ७४ ॥

म्लानः=ग्लानः । पुष्पोपहारः=कुसुमपूजा यस्य तथोक्तः । विरल-भक्तिः=विरलरचनः । भवति=जायते । स्वकिरणानाम्=आत्मरश्मीनाम् । विशीर्ण इत्यर्थः । परिवेषस्य=मण्डलस्य । उद्भेदेन=प्रकाशेन । शून्याः=वियुक्ताः । प्रदीपाः=प्रकाशपात्राणि । किञ्च । मञ्जुवाक्=मधुरालापः । पञ्जरस्थः=पंजरमध्यवर्त्ती । ते=तव । शुकः=कीरः । त्वत्प्रबोधनेन=त्वत्प्रबोधकारणेन । प्रयुक्ताम्=उच्चारिताम् । नः=अस्माकम् । गिरम्=वाचम् । अनुवदति=अनुकथयति ॥ ७४ ॥

इति विरचितवाग्भिर्बन्दिपुत्रैः कुमारः,
सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार ॥
मदपटुनिनदद्भिर्बोधितो राजहंसैः,
सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥ ७५ ॥

इति=अनेन प्रकारेण । विरचितवाग्भिः=उच्चारितस्तुतिवाक्यैः । बन्दिपुत्रैः=सूतसुतैः । सपदि=झटिति । विगतनिद्रः=त्यक्तशयनः । कुमारः=अजः । तल्पम्=शय्याम् । मदेन=उन्मत्ततया । पटु=मधुरम् । निनदद्भिः=कूजद्भिः[1] । राजहंसैः=कलहंसैः । बोधितः=दत्तप्रबोधः । सुप्रतीकः=ईशानदिग्गजः । सुरगजः=देवहस्तीविशेषः । गाङ्गम्=गङ्गा-सम्बन्धि । सैकतम्=पुलिनमिव । उज्झाञ्चकार=तत्याज ॥ ७५ ॥

अथ विधिमवसाय्यशास्त्रदृष्टं दिवसमुखोचितम-

---

१ चरणैश्चञ्चुसहितैर्लोहिता ये स्वयं सिताः । ते राजहंसा विख्याता इत्याहुः कोपकोविदाः ॥

ञ्चिताक्षिपक्ष्मा ॥ कुशलविरचितानुकूलवेषः क्षितिपसमाजमगात्स्वयंवरस्थम् ॥ ७६ ॥

अथ=उत्थानानन्तरम् । अञ्चितानि=चारूणि । आक्षिपक्ष्माणि=नेत्रलोमानि यस्य तथोक्तः । सोऽजः । शास्त्रदृष्टम्=शास्त्रोक्तम् । दिवसमुखोचितम्=प्रातःकालयोग्यम् । विधिम्=सन्ध्योपासनादि कर्म । अवसाय्य=समाप्य । कुशलैः=नेपथ्यविधिचतुरैः । विरचितः=संपादितः । अनुकूलः=इच्छासदृशः यथोचितो वा । वेषः=नेपथ्यम् । यस्य तथोक्तः सन् । स्वयंवरस्थम्=रङ्गशालास्थम् । क्षितिपसमाजम्=राजन्यसमूहम् । अगात्=इयाय ॥ ७६ ॥

इति श्रीव्रजरत्नभट्टाचार्यकृतौ रघुवंशविवृतौ
पञ्चमः सर्गः समाप्तः ।

---

इति श्रीमुरादाबाददेशिकव्रजरत्नभट्टाचार्यकृतरत्नप्रभाभिधानया
व्याख्यया संहितं रघुवंशसर्गचतुष्टयं समाप्तम् ।

शुभम् ।

---

मिलनेका पत्ताः—

पं० व्ही. के. लोंढे ॲन्ड कंपनी,

पो० गिरगाव—मुंबई, नंबर ४.

# जाहिरात.

| | | कि. | डा.म. |
|---|---|---|---|
| १ | किरातार्जुनीयकाव्य सटीक ग्लेज .... .... | २–० | ०–४ |
| २ | ” ” तथा रफ् .... .... | १-८ | ०-६ |
| ३ | कुमारसंभव सटीक .... .... .... .... | १–४ | ०–३ |
| ४ | गीतगोविन्द संस्कृतटीका और भाषाटीका .... | १–० | ०–२ |
| ५ | गीतगोविन्द मूल .... .... .... .... | ०–२ | ०–॥ |
| ६ | घटकर्परकाव्य भाषाटीका .... .... .... | ०–२ | ०–॥ |
| ७ | दशकुमारचरित्र सटीक .... .... .... | १–८ | ०–३ |
| ८ | पञ्चतंत्र ( पण्डितवर श्रीमान् विष्णुशर्मा संकलित ) मित्रभेद, मित्रसंप्राप्ति, काकोलूकीय, लब्धप्रणाश, अपरीक्षितकारक इन पांचों तंत्रोकी सरल हिंदी भाषाटीका पं० व्रजरत्न भट्टाचार्यजी द्वारा की गई है देखने योग्य है. .... .... .... .... | २–० | ०–४ |
| ९ | भर्तृहरिशतकत्रयरामचंद्रबुधेंद्रकृत सहृदयानंदिनी संस्कृतटीका और भाषाटीका.... .... | १–८ | ०–२ |
| १० | माघकाव्य ( शिशुपालवध ) सटीक संपूर्ण .... | २–८ | ०–६ |
| ११ | ” ” ३ सर्ग .... .... | ०–८ | ०–१ |
| १२ | ” ” ९ सर्ग .... .... | १–४ | ०–२ |
| १३ | रघुवंश मल्लीनाथकृत संजीवनी टीका और टिप्पणी सहित जिल्दबंद .... .... .... | ०–१२ | ०–२ |

पुस्तकें मिलनेका पत्ताः—

**पं० व्ही. के. लोंढे ॲन्ड कंपनी,**

पो० गिरगांव–मुंबई. नंबर ४.

Printed by Vinayak Balkrishna Paranjpe at the Native Opinion Press, Angria's Wadi, Girgaon, Bombay, and published by Vishvanath Keshav Londhe, Bharathitaishi Pustakalaya, Gopinath's Chall, Girgaon, Bombay.

